


॥ श्रीरस्तु ॥

# ॥ चन्द्रालोकप्रारम्भः ॥

॥ मङ्गलम् ॥

परस्परतपस्सम्पत्फलायितपरस्परौ ।
प्रपञ्चमातापितरौ प्राञ्चौ जायापती स्तुमः ॥
लङ्कारेषु बालानामवगाहनसिद्धये ।
लितः क्रियते तेषां लक्ष्यलक्षणसङ्ग्रहः ॥

॥ १. उपमालङ्कारः ॥

यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः ।
कृष्ण ते कीर्तिस्स्वर्गङ्गामवगाहते ॥ १

---

मरीकबरीभारभ्रमरीमुखरीकृतम् ।
दूरीकरोतु दुरितं गौरीचरणपङ्कजम् ॥

अथार्थालङ्काराणां मध्ये प्रधानत्वात्प्रथममुपमा निरूप्यते—सा तो द्विविधा । पूर्णा लुप्ता चेति । तत्रोपमानोपमेयसाधारण-वाचकानां चतुर्णां प्रयोगे पूर्णेत्युच्यते । तेषामन्यतमानुपादानेन तत्र तावदेकेन श्लोकेन उपमासामान्यलक्षणोक्तिपूर्वकं तामु- —उपमा यत्रेति । अत्र प्रथमार्धं लक्षणम् । द्वितीयार्धमुदा- एवमुत्तरत्रापि प्रायशः पूर्वार्धं लक्षणम् । उत्तरार्धं लक्ष्य- यम् । लक्षणवाक्यं व्याख्यायते—यत्र द्वयोः प्रसिद्धोपमा-

(लुप्तोपमालङ्कारः । तद्भेदाः)

वर्ण्योपमानधर्माणामुपमावाचकस्य च ।
एकद्वित्र्यनुपादानाद्भिन्ना लुप्तोपमाष्टधा ॥

नोपमेययोस्साद्दश्यलक्ष्मीरुल्लसति सहृदयहृदयाह्लादित्वेन चा
साद्दश्यमुद्भूततया भाति व्यङ्ग्यमर्यादां विना स्पष्टं प्रकाशत इ
सा उपमेत्यध्याहारेण योजना । यत्तदोर्नित्यसम्बन्धात् । अथोदा
व्याख्यायते—हे कृष्ण ते तव कीर्तिः हंसीव हंसाङ्गनेव स्व
आकाशगङ्गां अवगाहते तस्यां निमज्जतीत्यर्थः । तावत्पर्यन्तं व्य
तीति यावत् । अत्र कीर्तिहंस्योस्साद्दश्यस्य स्पष्टत्वादुपमालक्षणसं
अत्र हंसी उपमानम् । कीर्तिरुपमेयम् । स्वर्गङ्गावगाहनं साध
धर्मः इवशब्द उपमावाचक इति चतुर्णामप्युपादानादियं पूर्णोपम

अव—अथ लुप्तोपमां लक्षयन् तद्भेदान् संख्यया परि
नत्ति—वर्ण्येति । वर्ण्योपमानधर्माणामुपमेयोपमानसाधारणधर्
उपमावाचकस्य इवशब्दस्य चेत्येतेषां चतुर्णां मध्ये एकस्य द्वय
याणां वा अनुपादानादप्रयोगात् भिन्ना सती लुप्तोपमाष्टधा अष्ट
भवतीत्यर्थः । अयमत्र निष्कर्षः । उपमेयादीनां चतुर्णां मध्ये वाच
वा धर्मस्य वा धर्मवाचकयोर्वा वाचकोपमेययोर्वा उपमानस्य
वाचकोपमानयोर्वा धर्मोपमानयोर्वा धर्मोपमानवाचकानां वा उप
नाभावे यथाक्रमं वाचकलुप्ता धर्मलुप्ता धर्मवाचकलुप्ता वाचकोप
लुप्ता उपमानलुप्ता वाचकोपमानलुप्ता धर्मोपमानलुप्ता धर्मोपमान
कलुप्ता चेत्यष्टविधा लुप्तोपमा भवतीति ॥

**तटिद्गौरीन्दुतुल्यास्या कर्पूरन्ती दृशोर्मम ।**
**कान्त्या स्मरवधूयन्ती दृष्टा तन्वी रहो मया ॥**

अव—तत्राद्यांश्चतुरो भेदान् श्लोकेनोदाहरति—तटिदिति । अस्यार्थः तटिद्गौरी विद्युदिव पीतवर्णा इन्दुतुल्यास्या चन्द्रसदृशमुखी मम दृशोः कर्पूरन्ती कर्पूरमिवाचरन्ती कर्पूरमिव मदीयनेत्रानन्दकरीत्यर्थः ॥ कान्त्या स्मरवधूयन्ती शोभयात्मानं कामवधूमिव आचरन्ती आत्मनि स्मरवधूसौन्दर्यं प्रकटयन्तीत्यर्थः । एवंविधा तन्वी सुन्दरी रहः विजनस्थले मया दृष्टा विलोकिता । अत्र तटिद्गौरीत्यत्र तटिदिव गौरीत्यर्थे विवक्षिते समासे सति इवशब्दलोपात् वाचकलुप्ता । अत्र तटिदुपमानं गौरत्वं साधारणो धर्मः तन्वी उपमेयम् । एतेषामुपादानमस्ति वाचकस्य तु नोपादानम् । अतो वाचकलुप्ता इन्दुतुल्यास्येत्यत्र इन्दुरुपमानम् । तुल्येति वाचकशब्दः आस्यमुपमेयम् । एतेषामुपादानमस्ति । कान्त्यादिसाधारणधर्मस्य तु नोपादानम् । कान्त्या इन्दुतुल्यास्येति प्रयोगाभावात् । अतः इन्दुतुल्यास्येत्यत्र धर्मलुप्ता । कर्पूरन्ती दृशोर्ममेत्यत्र कर्पूरमिवाचरन्तीत्यर्थे विवक्षिते क्विपि सति कर्पूरतन्व्योरुपमानोपमेययोरुपादानमस्ति । साधारणधर्मवाचकयोस्तु नोपादानम् । अतः कर्पूरन्तीत्यत्र धर्मवाचकलुप्ता कान्त्या स्मरवधूयन्तीत्यत्र कान्त्या आत्मानं कामवधूमिवाचरन्तीत्यर्थे विवक्षिते क्यचि सति स्मरवधूकान्त्योरुपमानसाधारणधर्मयोरुपादानमस्ति उपमेयस्यात्मनः वाचकस्य इवशब्दस्य तु नोपादानम् । अतोऽत्र वाचनोमेयलुप्ता । एवमुपमानलोपरहिताश्चत्वारो भेदाः तटिद्गौरीत्यादिना दृष्टाः ॥

यत्तया मेळनं तत्र लाभो मे यच्च तद्रतेः ।
तदेतत्काकताळीयमवितर्कितसम्भवम् ॥ ४

यदिति—तत्र विजनस्थले तया पूर्वोक्तया तन्व्या सह मे मम मेळनं सङ्घटनमिति यत् तदा मे मम तद्रतेः तन्वी सुरतस्य च लाभः प्राप्तिरिति यत् अवितर्कितसम्भवम् । अवितर्कितः अविचारितः सम्भवो यस्य तत् अयत्नसिद्धमित्यर्थः ॥ तदेतत् तन्मेळनतत्सुरत-लाभरूपं वस्तु काकताळीयम् । काकागमनताळपतनसदृशं काककृत-ताळफलोपभोगसदृशं चेत्यर्थः ॥ मम तन्व्या सह समागम इति यत् तत्काकागमनताळफलपतनसदृशमिति समासार्थः । मम तन्वी-सुरतलाभ इति यत् तत्काककृतताळफलोपभोगसदृशमिति छप्रत्य-यार्थ इति निष्कर्षः । तथा च यथा काकागमनसमये ताळफलपत[illegible] तथा स्वस्य कचिद्गमनसमये दैवात्तत्रैव रहसि तन्व्यवस्थानमिति स्वगमनं काकागमनतुल्यं तन्व्या अवस्थानं च ताळफलपतनतुल्य-मिति निष्पन्नम् । ततः स्वस्य तन्व्याश्च समागमः काकागमनताळ-फलपतनसमागमसदृश इति फलितस्समासार्थः । ततः काकताळ-मिव काकताळमितीवार्थकसमासात् द्वितीयस्मिन्निवार्थे छप्रत्यये सति काकताळीयमिति रूपम् । तथा च पतनदळितं ताळफलं यथा काके-नोपभुक्तं तथा रहोदर्शनक्षुभितहृदया तन्वी स्वेनोपभुक्तेति छप्रत्ययार्थः पर्यवसन्नः । ततश्च स्वस्य तन्व्या सह सम्भोगः काककृतताळोपभोग-सदृश इति फलितोऽर्थः । अत्र छप्रत्ययगता उपमा तत्र तन्वीसम्भोगः उपमेयम् । अवितर्कितसम्भवत्वं साधारणो धर्मः । इवार्थक छप्रत्ययः उपमावाचकः । तेषां त्रयाणामुपादानमस्ति । ताळोपभोगस्य तु नोमान-दानं अत्र छप्रत्ययार्थोपमायामुपमानलुप्ता समासार्थोपमायां तु त[illegible]

२. अनन्वयालङ्कारः ॥

उपमानोपमेयत्वं यदेकस्यैव वस्तुनः ।
इन्दुरिन्दुरिव श्रीमानित्यादौ तदनन्वयः ॥

समागमरूपस्य उपमेयस्य अवितर्कितसम्भवत्वरूपसाधारणधर्मस्य चोपादानमस्ति । काकागमनताळफलपतनसमागमरूपोपमानस्य इव-शब्दस्य नोपादानम् । अतस्समासार्थोपमायामुपमानवाचकलुप्ता तदे-तत्काकताळीयमिति जानीहि । हे सखे पाठे उभयत्रापि साधारणधर्मो नोपात्तः । तत्पक्षे छप्रत्ययार्थोपमायां धर्मोपमानलुप्ता समासार्थोप-मायां धर्मोपमानवाचकलुप्ता मिळित्वा काकताळीयमित्यत्र लुप्तोपमा-श्चतस्र इति सूक्ष्मदृष्ट्यानुसन्धेयम् । एवं तटिद्गौरीत्यादि श्लोकद्वयेनाष्ट-विधा लुप्तोपमास्संगृहीताः ॥ ४

अथानन्वयमुदाहरणपूर्वकं लक्षयति—उपमानोपमेयत्वमिति । इन्दुरिन्दुरिव श्रीमानित्यादिना—'गगनं गगनाकारं सागरस्सागरो-पमः । रामरावणयोर्युद्धं रामरावणयोरिव' इत्यादिसंग्रहः । एकस्यैव वस्तुनः उपमानोपमेयत्ववर्णनमिति यत् । तदुपमानोपमेयत्ववर्णन-मनन्वयः । कान्तिमत्वविषये इन्दुरेव इन्दुतुल्यः नान्यस्तत्तुल्योऽस्ति एवं वैपुल्यविषये गगनमेव गगनतुल्यं नान्यत् । विस्तारविषये साग-रएव सागरतुल्यः नान्यः । घोरताविषये रामरावणयुद्धमेव रामरा-वणयुद्धतुल्यं नान्यदित्येकस्यैव वस्तुनः उपमानोपमेयत्ववर्णनाल्लक्षण-संगतिः । लोके हि द्वयोरेव उपमानोपमेयत्वयोग्यता एकस्य तूपमा-नोपमेयत्वं नान्वेतीत्यनन्वयपदं सार्थकम् । अनन्वयस्याप्यर्थस्य वर्ण-दृशान्तरव्यवच्छेदेन सर्वोत्कृष्टत्वद्योतनार्थं अतोनानुपपत्तिः ॥ ५

३. उपमेयोपमालङ्कारः ॥

पर्यायेण द्वयोस्तच्चेदुपमेयोपमा मता ।
धर्मोऽर्थ इव पूर्णश्रीरर्थो धर्म इव त्वयि ॥ ६

४. प्रतीपालङ्कारः ॥

प्रतीपमुपमानस्योपमेयत्वप्रकल्पनम् ।
त्वल्लोचनसमं पद्मं त्वद्वक्त्रसदृशो विधुः ॥ ७

---

अव—अथोपमेयोपमां लक्षयति—पर्यायेणेति । द्वयोर्मध्ये अन्यतरेणान्यतरस्य सादृश्यमुपवर्ण्य पुनरनन्तरेणान्यतरस्य सादृश्यवर्णनं पर्यायः तेन क्रमेण द्वयोरुपमानोपमेययोः तच्चेत् उपमानोपमेयत्वं यदि तदा उपमेयोपमा मता कविसम्मता । उदाहरति—धर्म इति । हे राजन् ! धर्मः अर्थ इव पूर्णश्रीः समृद्धस्सन् प्रवर्तते तथाऽर्थोऽपि धर्मइव पूर्णश्रीः त्वयि वर्तते पूर्णताविषये धर्मोऽर्थतुल्यः तथार्थो धर्मतुल्यः एवमुभयव्यतिरिक्तं तृतीयं नास्तीत्यर्थः । अत्र प्रथमं अर्थधर्मयोरुपमानोपमेयत्वं वर्णयित्वा पुनर्धर्मार्थयोस्तद्वर्णनाल्लक्षणसंगतिः ॥६

अव—प्रतीपं पञ्चविधं-[उपमानस्योपमेयत्ववर्णनम् ।[अवर्ण्यमुपमेयं प्रकल्प्य वर्ण्यतिरस्कारवर्णनं]।[वर्ण्योपमेयलाभेनावर्ण्यतिरस्कारवर्णनं। वर्ण्येन सहावर्ण्यस्य साम्यानिष्पत्तिवर्णनं । उपमेयलाभेन उपमानस्य अनार्थक्यवर्णनं चेति। तत्र प्रथमं लक्षयति—प्रतीपमिति । उपमानस्य चन्द्रादेरुपमेयत्वप्रकल्पनमिति यत्तत्प्रतीपमित्यर्थः । लोके वर्ण्यस्य मुखादेरुपमेयत्वं अवर्ण्यस्य चन्द्रादेरुपमानत्वमिति मर्यादा । तामुल्लङ्घ्य प्रातिलोम्येन वर्ण्यस्यैवोपमानत्वं अवर्ण्यस्य उप-

अन्योपमेयलाभेन वर्ण्यस्यानादरश्च तत् ।
अलं गर्वेण ते वक्त्र कान्त्या चन्द्रो भवादृशः ॥ ८

वर्ण्योपमेयलाभेन तथान्यस्याप्यनादरः ।
कः क्रौर्यदर्पस्ते मृत्यो त्वत्तुल्यास्सन्ति हि स्त्रियः ॥ ९

---

मेयत्वमिति कल्पनादन्वर्था प्रतीपसंज्ञा उदाहरति—त्वल्लोचनसममिति । हेसुन्दरि ! पद्मं त्वल्लोचनसमं भवन्नेत्रतुल्यं तथा विधुश्चन्द्रः त्वद्वक्त्रसदृशः भवन्मुखतुल्यः ॥ ७

अव—द्वितीयं लक्षयति—अन्येति । अन्यच्च तदुपमेयं च अन्योपमेयं तस्य लाभेन प्राप्त्या वर्ण्यस्य प्रकृतस्य अनादरस्तिरस्कार इतियत् तत्प्रतीपमित्यर्थः ॥ कान्त्यादिना अहमेवोत्कृष्टो नतु मत्तुल्योऽन्योस्तीत्यभिमानिनः प्रकृतस्य वक्त्रादेः अन्यदप्रकृतं चन्द्रादिकमुपमेयं परिकल्प्य तेन प्रकृतस्य तिरस्कार इति यत् । तदपि प्रतीपमिति निष्कर्षः । उदाहरति—अलमिति । हे वक्त्र हे मुख ते तव गर्वेण अहङ्कारेण अलं कान्त्या मत्तुल्यो नास्तीति गर्वं जहिहि । कुतः ? कान्त्या शोभया भवादृशः त्वत्तुल्यः चन्द्रः विद्यत इति शेषः । अत्राप्युपमेयभूतचन्द्रस्य लाभेन प्रकृतमुखतिरस्कारवर्णनाल्लक्षणसङ्गतिः ॥

अव—तृतीयं लक्षयति—वर्ण्येति । वर्ण्यञ्च तदुपमेयञ्च तस्य लाभेन अन्यस्य अवर्ण्यस्यानादरस्तिरस्कारोपि तथा । प्रतीपमित्यर्थः । अत्युत्कृष्टगुणतया अन्यदुपमेयमसहमानस्य अवर्ण्यस्य वर्ण्यमुपमेयं दृश्यं तिरस्कारोपि प्रतीपभेद एवेति निष्कर्षः । उदाहरति—क इति । हे मृत्यो । ते तव क्रौर्यदर्पः क्रूरत्वागतो गर्वः क्रौर्यविषये

वर्ण्येनान्यस्योपमाया अनिष्पत्तिवचश्च तत् ।
मुधापवादो मुग्धाक्षि त्वन्मुखाभं किलाम्बुजम् ॥ १०
प्रतीपमुपमानस्य कैमर्थ्यमपि मन्वते ।
दृष्टं चेद्वदनं तन्व्याः किं पद्मेन किमिन्दुना ॥ ११

मत्तुल्यो नास्तीत्यभिमानः कः किमर्थः ? कुतः ? हि यस्मात्कारणात् त्वत्तुल्याः क्रौर्यविषये त्वत्समाः स्त्रियस्सन्ति त्वत्तुल्यानां क्रूरस्त्रीणां सम्भवादहमेव क्रूर इति वृथाभिमानं माकृथाः इत्यर्थः ॥ अत्र वर्ण्यानां क्रूरस्त्रीणां लाभेन अवर्ण्यस्य मृत्योस्तिरस्कारवर्णनाल्लक्षण-सङ्गतिः ॥ ९

अव—चतुर्थं लक्षयति—वर्ण्येनेति । वर्ण्येन मुखादिना सहान्यस्यावर्ण्यस्य पद्मादेः उपमायाः साम्यस्यानिष्पत्तिवचः साम्याभाववर्णनं च तत् । प्रतीपमित्यर्थः । उदाहरति—हे मुग्धाक्षि ! चारु-लोचने मुधा असत्यभूतः अपवादः जनवादः तत्र श्रूयत इति शेषः कीदृशोऽपवाद इत्यत आह—त्वदिति । अम्बुजं पद्मं त्वन्मुखाभं किल । किलेति वार्तायां । पद्मं त्वन्मुखतुल्यमिति वार्ता श्रूयत इत्यर्थः । मुधेत्यनेनानिष्पत्तिरुक्तेति लक्षणसङ्गतिः ॥ १०

अव—पञ्चमं लक्षयति—प्रतीपमिति । उपमानस्य पद्मादेः कैमर्थ्यमपि प्रतीपं मन्वते मन्यन्ते । उपमेयस्यैव उपमानकार्यकारि-त्वादुपमानं किमर्थमिति वर्णनमपि प्रतीपमिति कवयो मन्वते उदा-हरति—दृष्टंचेदिति । तन्व्याः सुन्दर्याः वदनं मुखं दृष्टश्चेत् पद्मेन कि किं प्रयोजनम् ? इन्दुनात्रापि किं ? किं प्रयोजनमित्यर्थः । त…

## ५. रूपकालङ्कारः ॥

विषय्यभेदताद्रूप्यरञ्जनं विषयस्य यत् ।
रूपकं तत्त्रिधाधिक्यन्यूनत्वानुभयोक्तिभिः ॥ १२

मुखदर्शनेनैव चन्द्रादिदर्शनजनितनेत्रानन्दरूपकार्यस्य सम्भवाच्चन्द्रपद्मादिकं व्यर्थमिति निष्कर्षः ॥ ११

अव—अथ श्लोकेनैकेन रूपकं लक्षयन्विभजते—विषयीति । विषयस्योपमेयस्य विषय्यभेदरञ्जनं उपमानाभेदरञ्जनं तथाविषयस्य उपमेयस्य विषयिताद्रूप्यरञ्जनं उपमानताद्रूप्यरञ्जनं चेति यत्तद्रूपकं । तच्चाधिक्यन्यूनत्वानुभयोक्तिभिः त्रिधा—विषयस्य विषय्यपेक्षयाधिक्यवर्णनेन न्यूनत्ववर्णनेन तदुभयानुक्त्या च तद्द्विविधमपि रूपकं प्रत्येकं त्रिविधं भवतीत्यर्थः । अयमत्र निष्कर्षः । विषयिरूपेण विषयस्य रञ्जनं रूपकं तच्च संक्षेपतः अभेदरूपकं ताद्रूप्यरूपकं चेति द्विविधं । तत्र यत्स्वपदेनोपात्तस्य विषयस्य विषयिरूपेण रञ्जनं तद्विषय्यभेदपर्यवसन्नत्वादभेदरूपकमित्युच्यते । यच्च स्वपदोपात्तयोः विषयविषयिणोः भेदे प्रतीयमाने सत्येव विषयिरूपेण विषयस्य रञ्जनं तत् तद्धर्मारोपमात्रपर्यवसितत्वात्ताद्रूप्यरूपकमित्युच्यते । तद्द्विविधमपि विषय्यपेक्षया विषयस्याधिक्योक्त्या न्यूनत्वोक्त्या तदुभयानुक्त्या च प्रत्येकं त्रिविधं । तथाच 'अधिकाभेदरूपकं न्यूनाभेदरूपकं अनुभयभेदरूपकं चेति अभेदरूपकं त्रिविधं । 'अधिकताद्रूप्यरूपकं न्यूनताद्रूप्यरूपकं अनुभयताद्रूप्यरूपकं चेति त्रिविधं ताद्रूप्यरूपकं । एवं सति रूपकं षड्विधं भवतीति पर्यवस्यति ॥ १२

अयं हि धूर्जटिस्साक्षाद्येन दग्धाः पुरः क्षणात् ।
अयमास्ते विना शम्भुस्तार्तीयीकं विलोचनम् ॥ १३

शम्भुर्विश्वमवत्यद्य स्वीकृत्य समदृष्टिताम् ।
अस्या मुखेन्दुना लब्धे नेत्रानन्दे किमिन्दुना ॥ १४

---

तत्र सार्धश्लोकेनानुभयन्यूनाधिकभेदरूपकाणि उद्देशक्रमप्रातिलोम्येनोदाहरति—अयंहीति । अयं पुरोवर्ती साक्षाद्धूर्जटिः शिव एव धूर्जटिरेव भूलोकं रक्षितुं राजा सन् स्थित इत्यर्थः । कुतः? हि यस्मात् येन पुरः शत्रुपुराणि क्षणाद्दग्धाः अतः पुरदाहकत्वादेव साक्षाद्धूर्जटिरेवेत्यभेदरञ्जनात् न्यूनाधिक्ययोरवर्णनाच्च अनुभयाभेदरूपकं । अथ न्यूनाभेदरूपकमुदाहरति—अयमिति । तार्तीयीकं तृतीयं विलोचनं नेत्रं विना शम्भुरेवायमास्ते तिष्ठति । शम्भुरेवायं प्रभुस्सन् उदितः किन्तु अस्यामवस्थायां तृतीयलोचनं परिहृतमिति पूर्वावस्थातो राजत्वावस्थायां न्यूनत्ववर्णनाच्च न्यूनाभेदरूपकम् ॥ १३

अथाधिकाभेदरूपकमुदाहरति—शम्भुरिति । शम्भुश्शिव एव अयं समदृष्टितां स्वीकृत्य समदृष्टिस्सन्नित्यर्थः । विश्वं भूमण्डलं अवति रक्षति किन्तु पूर्वावस्थायां विषमदृष्टिः इदानीं समदृष्टिरित्यभेददार्ढ्यात् पूर्वावस्थातः राजत्वावस्थायां समदृष्टिस्वीकारेणाधिक्यप्रतिपादनाच्च अधिकाभेदरूपकं । अथ ताद्रूप्यरूपकं पूर्ववदुद्देशक्रमप्रातिलोम्येनोदाहरति—अस्या इति । अस्याः सुन्दर्याः मुखमेवेन्दुः चन्द्रः तेन नेत्रानन्दे लब्धे प्राप्ते सति इन्दुना चन्द्रेण किम्? किं प्रयोजनम्? मुखस्यैव चन्द्रकार्यकारित्वाच्चन्द्रो व्यर्थ एवेत्यर्थः ।

साध्वीयमपरा लक्ष्मीरसुधासागरोदिता ।
अयं कळङ्किनश्चन्द्रान्मुखचन्द्रोऽतिरिच्यते ॥ १५

६. परिणामालङ्कारः ॥

परिणामः क्रियार्थश्चेद्विषयी विषयात्मना ।
प्रसन्नेन दृगब्जेन वीक्षते मदिरेक्षणा ॥ १६

---

अत्र मुखचन्द्रयोर्भेदे प्रतीयमाने सत्येव मुखेन्दुनेति चन्द्ररूपेण मुखस्य रञ्जनादनुभयोक्त्या च अनुभयताद्रूप्यरूपकम् ॥ १४

न्यूनताद्रूप्यरूपकमुदाहरति—साध्वीति । इयं पुरोवर्तिनी साध्वी पतिव्रता अपरा द्वितीया असुधासागरोदिता सुधाब्धेरनुत्पन्ना लक्ष्मीः । अपरा लक्ष्मीरिति भेदे प्रतीयमाने सत्येव साध्व्यां लक्ष्मीरूपत्वरञ्जनात् असुधासागरोदितेति न्यूनत्वप्रतिपादनाच्च न्यूनताद्रूप्यरूपकं । अधिकताद्रूप्यरूपकमुदाहरति—अयमिति । अयं पुरोवर्ती मुखचन्द्रः मुखेन्दुः कळङ्किनः कळङ्कसहिताच्चन्द्रादातिरिच्यते अतिशेते अतिशयितो भवतीत्यर्थः ॥ अत्र प्रसिद्धचन्द्रस्तु कळङ्की मुखचन्द्रस्तु निष्कळङ्क इति विषय्यपक्षेया वर्ण्यस्याधिक्यवर्णनादधिकताद्रूप्यरूपकम् ॥ १५

अथ परिणामं लक्षयति—परिणाम इति । विषयी उपमानं विषयात्मना उपमेयात्मना उपमेयैक्येनेति यावत् । क्रियार्थश्चेत् प्रकृतकार्यार्थस्याद्यदि परिणामालङ्कार इत्यर्थः ॥ यत्र विषयी प्रकृतकार्योपयोगित्वेन निबद्धस्सन् स्वरूपेण तत्कार्यकरणसामर्थ्याभावात् तदर्थमुपमेयात्मतामपेक्षते तत्र परिणामालङ्कार इति निष्कर्षः । उदाहरति-प्रसन्नेनेति । मदिरे मत्ते ईक्षणे यस्यास्साङ्गना प्रसन्नेन निर्मलेन दृक्

## ७. उल्लेखालङ्कारः ॥

बहुभिर्बहुधोल्लेखादेकस्योल्लेख इष्यते ।
स्त्रीभिः कामोऽर्थिभिस्स्वर्द्रुः कालश्शत्रुभिरैक्षि सः ॥ १७

---

लोचनमेव अब्जं तेन वीक्षते स्वकान्तं पश्यतीत्यर्थः ॥ अत्र प्रधानस्य उत्तरपदार्थस्य अब्जस्य वीक्षणकार्यान्वयः प्राप्तः सच पद्मस्य स्वरूपेण न सम्भवति अचेतनस्य वीक्षणकरणत्वासम्भवात् । अतः स्वस्य वीक्षणोपयोगसिद्धये पूर्वपदार्थलोचनात्मना परिणामापेक्षणाल्लक्षण - सङ्गतिः । अत्र विषयिणो विषयात्मना परिणाम इत्यन्वर्थसंज्ञा ॥ १६

अथोल्लेखः । स च द्विविधः एकस्यानेकैरनेकधोल्लेखनरूपः एकस्यैकेनैवानेकधोल्लेखनरूपश्चेति । तत्राद्यं लक्षयति—बहुभिरिति । एकस्य वस्तुनः सौन्दर्यौदार्याद्यनेकधर्मविशिष्टस्य बहुभिरनेकैः गृहीतृपुरुषैः बहुधा कामकल्पतरुत्वादिबहुप्रकारैः उल्लेखादुद्घाटनादुल्लेखः उल्लेखाख्योऽलङ्कारः इष्यते कविभिरङ्गीक्रियते । उदाहरति—स्त्रीभिरिति । सः सौन्दर्यवितरणपराक्रमशाली राजा स्त्रीभिः कामुकीभिः कामो मदनः ऐक्षि मदनत्वेन दृष्ट इत्यर्थः ॥ तत्सौन्दर्यमोहिताभिस्ताभिस्सुरताभिलाषादयङ्काम एवेति तर्कित इति निष्कर्षः । तथार्थिभिः स्वर्द्रुः कल्पतरुरैक्षि कल्पतरुत्वेन दृष्टः तथावितरणजनिततृष्णापरवशैरर्थिभिः अयं कल्पवृक्षएवेति तर्कित इत्यर्थः ॥ तथा शत्रुभिः काल ऐक्षि यमत्वेन निश्चित इत्यर्थः ॥ तदीयतीव्रप्रतापजनितभयपरवशैः शत्रुभिरयमन्तक एवेति तर्कित इति निष्कर्षः । अत्र एक एव सौन्दर्यौदार्यप्रतापविशिष्टो राजा स्त्रीप्रभृतिभिस्सुरताभिलाषादिहेतुना कामत्वादिबहुप्रकारैरुल्लिखित इति लक्षणसङ्गतिः ॥ १७

एकेन बहुधोल्लेखेऽप्यसौ विषयभेदतः ।
गुरुर्वचस्यर्जुनोऽयं कीर्तौ भीष्मश्शरासने ॥ १८

८. ९. १०. स्मृतिमद्भ्रान्तिमत्सन्देहालङ्काराः ॥

स्यात् स्मृतिभ्रान्तिसन्देहैस्तदङ्कालङ्कृतित्रयम् ।
पङ्कजं पश्यतः कान्तामुखं मे गाहते मनः ॥ १९

---

अथ द्वितीयं लक्षयति—एकेनेति । अत्र एकस्येत्यनुषज्यते । एकेनैव गृहीत्रा एकस्य वाग्मीत्वकीर्तिमत्त्वधन्वित्वादियुक्तस्य राज्ञः विषयभेदतः वाक्कीर्त्यादिविषयभेदात् बहुधा गुरुत्वादिबहुप्रकारैरुल्लेखे उद्घाटने सति असावुल्लेखालङ्कारः । उदाहरति—गुरुरिति । अत्र एकएव गृहीतृपुरुषः वाग्मीत्वयशस्वित्वधन्वित्वयुक्तं प्रभुं दृष्ट्वैवमुल्लिखति—किमिति ? अयं राजा वचसि वाक्ये विषये गुरुः महान् बृहस्पतिश्च । तथा कीर्तौ विषये अर्जुनः शुभ्रः पार्थश्च । तथा शरासने धनुषि विषये भीष्मः भयङ्करः गाङ्गेयश्च । अत्र एकेनैव गृहीत्रा एकएव राजा वागादिविषयभेदात् बहुधा गुरुत्वार्जुनत्वभीष्मत्वप्रकारैरुल्लिखित इति लक्षणसंगतिः ॥ १८

अथ स्मृतिमद्भ्रान्तिमत्सन्देहालङ्कारान् लक्षयति—स्यादिति । स्मृतिभ्रान्तिसन्देहैर्हेतुभिः स्मरणभ्रमसन्देहवर्णनाद्धेतोरित्यर्थः । तदङ्कालङ्कृतित्रयं स्मृतिभ्रान्तिसन्देहपदाङ्कितमलङ्कृतित्रयं स्यात् । क्रमेण स्मृतिमान् भ्रान्तिमान् सन्देह इति स्मृत्यादिपदघटितनामकमलङ्कारत्रयं भवतीत्यर्थः । यत्र कविसम्मतसादृश्याद्विषयविषयिणोरन्यतरदर्शनेनान्यतरस्मृतिर्निबध्यते तत्र स्मृतिमदलङ्कारः । यत्र विषये मुखादौ

अयं प्रमत्तमधुपस्त्वन्मुखं वेत्ति पङ्कजम् ।
पङ्कजं वा सुधांशुर्वेत्यस्माकं तु न निर्णयः ॥ २०

११. अपह्नवालङ्कारः ॥ (तद्भेदाः) ॥

शुद्धापह्नुतिरन्यस्यारोपार्थो धर्मनिह्नवः ।
नायं सुधांशुः किं तर्हि व्योमगङ्गासरोरुहम् ॥ २१

---

पद्मादिभ्रमो निबध्यते तत्र भ्रान्तिमदलङ्कारः । यत्र विषयविषयिणोस्साधारणधर्मदर्शनाद्विशेषादर्शनाच्च सन्देहो निबध्यते तत्र सन्देहालङ्कार इति निष्कर्षः । तत्र प्रथममुदाहरति—पङ्कजमिति । पङ्कजं पश्यतः मे मनः कान्तामुखं प्रियावदनं गाहते स्मरतीत्यर्थः । पद्ममुखयोरत्यन्तसादृश्यात् पद्मसन्दर्शने सति तत्सदृशं प्रियामुखं मया स्मर्यत इत्यर्थः । अत्र मुखसदृशपद्मदर्शनेन तत्सदृशस्य मुखस्य स्मृतिवर्णनाल्लक्षणसङ्गतिः ॥ १९

अथ—द्वितीयमुदाहरति—अयमिति । हे कान्ते अयं पुरोवर्ती प्रमत्तः मधुपः मधुपानपरवशो भ्रमरः त्वन्मुखं पङ्कजं वेत्ति । अत्र मुखे पङ्कजत्वप्रतिपत्तिवर्णनाद्भ्रान्तिमदलङ्कारः । तृतीयमुदाहरति—पङ्कजमिति । पङ्कजं वा ? अत्र सुधांशुश्चन्द्रो वा ? इत्येवं प्रकारेणास्माकं तु न निर्णयः अनिश्चयः । पङ्कजं वा सुधांशुर्वेत्याकारकस्संशयो भवतीत्यर्थः । अत्र मुखे पङ्कजत्वसुधांशुत्वकोटिकसन्देहनिबन्धनात्सन्देहालङ्कारः ॥ २०

अथापह्नुतिः । सा च षड्विधा—शुद्धापह्नुतिः । हेत्वपह्नुतिः । पर्यस्तापह्नुतिः । भ्रान्तापह्नुतिः । छेकापह्नुतिः । कैतवापह्नुतिश्चेति ॥

(हेत्वपह्नवालङ्कारः)

सएव युक्तिपूर्वश्चेदुच्यते हेत्वपह्नुतिः ।
नेन्दुस्तीव्रो न निश्यर्कः सिन्धोरौर्वोऽयमुत्थितः ॥ २२

---

तत्र शुद्धापह्नुतिं लक्षयति—शुद्धापह्नुतिरिति। अन्यस्याप्रकृतधर्मस्य आरोपार्थः आरोपफलको यो धर्मनिह्नवः प्रकृतधर्मापह्नवः सा शुद्धापह्नुतिः । यत्र वर्णनीये चन्द्रादौ अवर्ण्यपद्मत्वाद्यारोपार्थः तदीयचन्द्रत्वाद्यपह्नवः क्रियते तत्र शुद्धापह्नुतिरित्यर्थः॥ उदाहरति—नेति । अयमाकाशे दीप्यमानः सुधांशुर्न भवति । किं तर्हि ? किन्तु व्योमगङ्गासरोरुहं आकाशगङ्गापद्मं । वर्णनीये चन्द्रे तत्सदृशवियन्नदीपुण्डरीकगतस्य पुण्डरीकत्वस्यारोपाय तदीयचन्द्रत्वापह्नवः क्रियते अत इयं शुद्धापह्नुतिः ॥ २१

अव—हेत्वपह्नुतिं लक्षयति—

स इति । स एव अन्यस्यारोपार्थः प्रकृतधर्मनिह्नवः युक्तिपूर्वश्चेत् सहेतुको यदि तर्हि हेत्वपह्नुतिरित्युच्यते । यत्र प्रकृतधर्मं युक्तिपूर्वकमपह्नुत्यान्यधर्मः तत्र आरोप्यते तत्र हेत्वपह्नुतिरिति निष्कर्षः । उदाहरति—नेति । विरहतप्तायाः कस्याश्चित् स्त्रियाः चन्द्रं प्रत्युपालम्भवचनमिदं । तीव्रः तीक्ष्णः अयं परिदृश्यमानः इन्दुर्न भवति तीव्रइति हेतुगर्भविशेषणं । तीक्ष्णत्वादिन्दुर्न भवतीत्यर्थः ॥ तर्हि सूर्योऽस्त्वित्यत आह—नेति । निशि रात्रौ । स्थित इति शेषः । अयं परिदृश्यमानः नैशत्वात्सूर्यो न भवतीत्यर्थः । तर्हि चन्द्रसूर्यव्यतिरिक्तस्समुद्रादुत्थितोयं को वा भवेदित्याशङ्क्य निश्चिनोति—सिन्धो-

(पर्यस्तापह्नवालङ्कारः)

अन्यत्र तस्यारोपार्थः पर्यस्तापह्नुतिस्तु सः ।
नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम् ॥ २३

(भ्रान्तापह्नवालङ्कारः)

भ्रान्तापह्नुतिरन्यस्य शङ्कायां भ्रान्तिवारणे ।

---

रिति । अयं परिदृश्यमानः तीव्रपदार्थः सिन्धोस्समुद्रादुत्थितः औौर्वः बडबानलएव समुद्रादुत्थितत्वान्नैशत्वात्तीव्रत्वाच्च बडबाग्नि-रेवायं भवितुमर्हति न तु चन्द्रसूर्याविव्यर्थः ॥ अत्र तीव्रत्वनैशत्व-युक्तिपूर्वकः चन्द्रत्वाद्यपह्नवः बडबानलत्वारोपार्थ इति भवति हेत्व-ह्नुपतिः ॥ २२

अव—अथ पर्यस्तापह्नुतिं लक्षयति—

अन्यत्रेति । सः कचिद्धर्मापह्नवः अन्यत्र वर्णनीये कान्ता-मुखादौ तस्यापह्नुतिधर्मस्यारोपार्थश्चेत्पर्यस्तापह्नुतिरित्यर्थः ॥ यद्वा यः अवर्ण्यगतचन्द्रत्वाद्यपह्नवः अन्यत्र वर्णनीये मुखादौ तस्यापह्नुतचन्द्र-त्वादेरारोपार्थः आरोपफलको भवति । स तु पर्यस्तापह्नव इति योजना । यत्तदोर्नित्यसम्बन्धात् । उदाहरति—नेति । अयं परिदृश्यमानः सुधांशुः चन्द्रो न भवति । किं तर्हि ? किन्तु प्रेयसीमुखं कान्तावदन-मेव सुधांशुः । तन्मुखदर्शनं विना परिदृश्यमानेन्दोः प्रत्युत सन्ताप-करत्वात्प्रेयसीवदनदर्शनस्य तु नेत्रानन्दकरत्वादिदमेव सुधांशुरिति भावः ॥ अत्र सुधांशौ सुधांशुत्वापह्नवस्य स्त्रीमुखे तद्धर्मारोपार्थत्वा-त्पर्यस्तापह्नुतिः ॥ २३

भ्रान्तातह्नुतिरिति । अन्यस्य इतरजनस्य शङ्कायां तत्त्वाज्ञानेन

तापं करोति सोत्कम्पं ज्वरः किं ? न सखि स्मरः ॥ २४

(छेकापह्नवालङ्कारः) ॥

छेकापह्नुतिरन्यस्य शङ्कातस्तथ्यनिह्नवे ।

प्रजल्पन्मत्पदे लग्नः कान्तः किं न हि नूपुरः ॥ २५

अयथार्थवस्तुनः भ्रान्तौ सत्यां भ्रान्तिवारणे सति तत्त्वस्वरूपकथनेन भ्रान्तिवारणे कृते सति भ्रान्तापह्नुतिः । केनाचिद्वक्त्रा किञ्चित्प्रकृतमुद्दिश्य वृत्तान्ते कथिते सति तस्याप्रकृतसाधारण्यादितरजनस्य श्रोतुस्तत्त्वज्ञानादनुद्देश्यविषयकशङ्कायां सत्यां वक्त्रा तत्त्वकथनेन तद्भ्रान्तिवारणे कृते सति भ्रान्तापह्नवाख्योऽलङ्कारः । उदाहरति—तापमिति । काचिन्नायिका स्मरं मनसि निधाय स्वसखीं प्रति तद्वृत्तान्तमाह—हे सखि! सोत्कम्पं सगात्रकम्पं यथा तथा तापं शरीरसन्तापं करोत्युत्पादयति ततस्सखी नायिकातात्पर्यमजानाना पृच्छति—हे मुग्धे! ज्वरः किं भवत्सन्तापकरः किं ज्वरो भवेत् कथयेति प्रश्नः । अथ नायिका आर्जवेनैवोत्तरमाह—नेति । ज्वरो नभवतीत्यर्थः । किन्तु हे सखि! स्मरः । तापं करोतीत्यनुषङ्गः । मत्सन्तापकारी मन्मथएव नतु ज्वरइत्यर्थः । अत्र स्मरपदमनुपादाय नायिकया सामान्येन तापं करोतीत्युक्ते तापस्य ज्वरसाधारण्यादकुटिलया सख्या ज्वरः किमिति शङ्किते सति न सखि स्मर इति नायिकया सखीभ्रान्तिर्निवारिता अतो भ्रान्तापह्नुतिरियम् ॥ २४

अव—अथ छेकापह्नुतिं लक्षयति—

छेकापह्नुतिरिति । अन्यस्य श्रोतृजनस्य शङ्कातः वक्त्राभिप्रेतार्थविषयाप्रकाशात् श्रोत्रा वक्त्रभिप्रेतार्थे पृष्टे सतीत्यर्थः । तथ्यनिह्नवे

(कैतवापह्नवालङ्कारः) ॥

कैतवापह्नुतिर्व्यक्तौ व्याजाद्यैर्निह्नुतेः पदैः ।
निर्यान्ति स्मरनाराचाः कान्तादृक्पातकैतवात् ॥ २६

अयथार्थकथनपूर्वकं वक्त्रा स्वाभिप्रेतार्थनिह्नवे कृते सति छेकापह्नुतिः । केनचित्कस्मैचिदाप्तजनाय स्वरहस्ये निवेद्यमाने सति दैवादागतेन केनचित्परिचितेन यथार्थे पृष्टे सति स्वरहस्यप्रकाशभीतेन विदग्धेन वक्त्रा अतथ्यं निवेद्य तथ्यनिगूहने कृते सति छेकापह्नुतिरलङ्कार इति निष्कर्षः । उदाहरति—प्रजल्पन्निति । नायिका स्वकान्तं मनसि कृत्वा आप्तसखीमुद्दिश्याह—हे सखि प्रजल्पन् शब्दायमानस्सन् मत्पदे मदीयपादे लग्नः सङ्गतः । इति । अथ दैवादागता काचिदनाप्ता तथ्यमेव पृच्छति—कान्तः किमिति । हे सुन्दरि प्रजल्पन्नित्यादिना त्वदुक्तः कान्तः किं त्वत्प्रियः । किंभवेदिति प्रश्नः । अथ कान्ता स्वरहस्यप्रकाशभीरुस्सती तथ्यं निगूह्यासत्यमावेदयति—

नहीति । जल्पन्नित्यादिना मयोक्तः कान्तो नभवति किन्तु नूपुरः नूपुराभिप्रायेण मयोक्तः नतु वल्लभाभिप्रायेणेति । अत्र स्वप्रियमेवोद्दिश्य वदन्त्या नायिकया तमेव पृच्छन्तीमनाप्तां प्रति अतथ्यनूपुरं निवेद्य तथ्यकान्तनिह्नवात् छेकापह्नुतिर्भवति ॥ २५

कैतवापह्नुतिं लक्षयति—कैतवापह्नुतिरिति । व्याजाद्यैः व्याजच्छलकैतवादिभिः पदैर्निह्नुतेः धर्मनिह्नवस्य व्यक्तौ सत्यां स्फुटत्वे सति कैतवापह्नुतिरित्युच्यते । यत्र कविना कण्ठतोऽपह्नवस्याभावेऽपि असत्यत्वप्रतिपादककैतवादिपदैरेव धर्मापह्नवः क्रियते तत्र कैतवा-

## १२. उत्प्रेक्षालङ्कारः (तद्भेदाः)

**सम्भावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मना ।**
**उक्तानुक्तास्पदाद्यात्र सिद्धासिद्धास्पदे परे ॥ २७**

पह्नुतिरिति निष्कर्षः । उदाहरति—निर्यान्तीति । कान्तादृक्पातकैतवात् प्रियादृष्टिप्रसारव्याजात् स्मरनाराचाः मदनबाणविशेषा एव निर्यान्ति लोचनान्निर्गच्छन्तीत्यर्थः ॥ असत्यत्ववाचिना कैतवपदेन नेमे कटाक्षा इति निह्नवः प्रतीयते । अत्र व्याजादिमध्यपठितकैतवपदेन कटाक्षत्वनिह्नवस्य व्यक्तत्वाल्लक्षणसङ्गतिः ॥ २६

अथोत्प्रेक्षां लक्षयन् प्रथमं संक्षेपतः तां त्रिधा विभजते—सम्भावनेति । वस्तुहेतुफलात्मना वस्त्वात्मना हेत्वात्मना फलात्मना सम्भाना वितर्कः उत्प्रेक्षा स्यात् । अयमत्र निष्कर्षः—अन्यधर्मसम्बन्धेन हेतुनान्यस्यान्यतादात्म्यसम्भावनोत्प्रेक्षेति सामान्यलक्षणं । सा च कस्यचिद्वस्तुनो वस्त्वन्तरतादात्म्यगोचरत्वेन अहेतोर्हेतुभावगोचरत्वेन अफलस्य फलभावगोचरत्वेन च त्रिविधा । तत्राद्या स्वरूपोत्प्रेक्षा । द्वितीया हेतूत्प्रेक्षा । तृतीया फलोत्प्रेक्षेति । त्रिविधामिमां पुनर्द्विधा विभजते—उक्तानुक्तास्पदेति । अत्र त्रिविधासु मध्ये आद्या स्वरूपोत्प्रेक्षा उक्तानुक्तास्पदा उक्तानुक्ते आस्पदे विषयौ यस्यास्सा उक्तविषयानुक्तविषया चेति द्विविधेत्यर्थः ॥ परे अवशिष्टहेतुफलोत्प्रेक्षे सिद्धासिद्धास्पदे सिद्धासिद्धे प्रसिद्धाप्रसिद्धे (विद्यमानाविद्यमाने) आस्पदे विषयौ ययोस्ते । सिद्धविषये असिद्धविषये चेति द्विविधेत्यर्थः॥

(स्वरूपोत्प्रेक्षालङ्कारः)

**धूमस्तोमं तमश्शङ्के कोकीविरहशुष्मणाम् ।**
**लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ॥** २८

(हेतूत्प्रेक्षालङ्कारः)

**रक्तौ तवाङ्घ्री मृदुलौ भुवि विक्षेपणाद्ध्रुवम् ।**

---

अव—तथा च उक्तविषयां स्वरूपोत्प्रेक्षामुदाहरति—धूमस्तोममिति । अहं तमः अन्धकारं कोकीनां चक्रवाकाङ्गनानां विरहशुष्माणः विरहानलाः तेषां सम्बन्धिनं धूमस्तोमं शङ्के । इदं तमः चक्रवाकीविरहाग्निधूमसमूह इति तर्कयामीत्यर्थः ॥ अत्र सर्वतः प्रवर्धमानान्धकारस्य नैल्यदृष्टिप्रतिरोधकत्वादिधर्मसम्बन्धगम्यमानं निमित्तीकृत्य तत्समये प्रियविघटितकोकीहृदयगतप्रज्वलिष्यद्विरहानलसम्बन्धिधूमस्तोमतादात्म्यसम्भावनोत्प्रेक्षा सा च धूमस्तोमानात्मकस्य तमसस्तदात्मतागोचरत्वात्स्वरूपोत्प्रेक्षा सा च तमसो विषयस्य उक्तत्वादुक्तविषया । अथानुक्तविषये द्वे स्वरूपोत्प्रेक्षे उदाहरति—लिम्पतीवेति । तमः अङ्गानि गात्राणि लिम्पतीव । अङ्गलेपनं करोतीव तथा नभः अञ्जनं वर्षतीव । तमोव्यापनं दृष्ट्वा एवमुत्प्रेक्षते—इदं तु तमःकर्तृकाङ्गलेपनमिव नभःकर्तृकाञ्जनवर्षणमिवेति च । अत्र नभःप्रभृतिभूमिपर्यन्तसकलवस्तुमलिनीकरणधर्मसम्बन्धं निमित्तीकृत्य तमोव्यापनस्य तमःकर्तृकाङ्गलेपनतादात्म्योत्प्रेक्षा नभःकर्तृकाञ्जनवर्षण तादात्म्योत्प्रेक्षा च वर्तते । अतः तमोव्यापनरूपविषयस्यानुपादानादिमे अनुपात्तविषये स्वरूपोत्प्रेक्षे ॥ २८

अव—सिद्धविषयां हेतूत्प्रेक्षामुदाहरति—

रक्ताविति । हे सुन्दरि मृदुलौ कोमलौ तवाङ्घ्री पादौ भुवि

त्वन्मुखाभेच्छया नूनं पद्मैर्वैरायते शशी ॥ २९

(फलोत्प्रेक्षालङ्कारः) ॥

मध्यः किं कुचयोर्धृत्यै बद्धः कनकदामभिः ।
प्रायोऽब्जं त्वत्पदेनैक्यं प्राप्तुं तोये तपस्यति ॥ ३०

---

विक्षेपणात् सञ्चारात् रक्तौ लोहितौ भवतः । ध्रुवमित्युत्प्रेक्षाव्यञ्जकं । अत्र कान्तापादयोः लौहित्यस्य स्वतस्सिद्धत्वात्तत्र विक्षेपणं न हेतुः अतः अहेतुभूतस्य हेतुत्वसम्भावनात् हेतूत्प्रेक्षा, सा च विक्षेपणरूपविषयस्य प्रसिद्धत्वात् सिद्धविषया ॥

असिद्धविषयां हेतूत्प्रेक्षामुदाहरति—

त्वदिति । हे कान्ते! शशी चन्द्रः त्वन्मुखाभेच्छया त्वन्मुखसौन्दर्यलिप्सया पद्मैर्वैरायते पद्मैस्सह वैरं करोतीत्यर्थः । अत्र चन्द्रपद्मविरोधस्य स्वाभाविकत्वात् तत्र तन्मुखकान्तिलिप्सा न हेतुः । अतः अहेतोः हेतुभाववर्णनाच्चन्द्रस्य कान्तामुखकान्तिलिप्सायाः अप्रसिद्धत्वादसिद्धविषया हेतूत्प्रेक्षा ॥ २९

सिद्धविषयां फलोत्प्रेक्षामुदाहरति—

मध्य इति । कश्चित्स्वकान्तावळित्रयावरणं कनकदामबन्धनत्वेनाध्यवस्योत्प्रेक्षते—हे कान्ते मध्योऽवलग्नं कुचयोः धृत्यै धारणाय कनकदामभिः स्वर्णरज्जुभिः बद्धः किल? अन्यथातिसौक्ष्यात्सद्य एव कुचभाराद्भङ्गमायादिति भावः । अत्र मध्यः स्वतएव कुचौ वहति न तु कनकदामबन्धनत्वेनाध्यवसितवळित्रयवेष्टनबलात् अतः

### १३. अतिशयोक्त्यलङ्कारः ॥

रूपकातिशयोक्तिस्स्यान्निगीर्याध्यवसानतः ।
पश्य नीलोत्पलद्वन्द्वान्निस्सरन्ति शिताश्शराः ॥ ३१

---

कनकदामबन्धनाफलस्य कुचधारणस्य तत्फलत्वेनोत्प्रेक्षणात् फलोत्प्रेक्षा । कुचधारणस्य प्रसिद्धत्वात्सिद्धविषया ॥

असिद्धविषयां फलोत्प्रेक्षामुदाहरति—

प्राय इति । अत्र पद्मस्य जलावस्थानं अम्भोवासं तपस्त्वेन अध्यवस्य उत्प्रेक्षते—हे कान्ते अब्जं पद्मं त्वत्पदेन त्वत्पादेन सह ऐक्यं सायुज्यं प्राप्तुं प्रायः भूम्ना तोये जले तपस्यति तपः करोति । अम्भोवासरूपं तपः करोतीत्यर्थः । अत्र पद्मस्य तपस्त्वेनाध्यवसितं जलेऽवस्थानं स्वभावादेव नतु कामिनीपदसायुज्यप्राप्त्यर्थं अतोऽफलस्य कामिनीपदसायुज्यस्य तत्फलत्वेनोत्प्रेक्षणात् कामिनीपदसायुज्यस्य अत्यन्ताप्रसिद्धत्वाच्च असिद्धविषया फलोत्प्रेक्षा ॥ ३०

अव—अथातिशयोक्तिरलङ्कारः । सा च सप्तधा—रूपकातिशयोक्तिः । भेदकातिशयोक्तिः । सम्बन्धातिशयोक्तिः । असम्बन्धातिशयोक्तिः । अक्रमातिशयोक्तिः । चपलातिशयोक्तिः । अत्यन्तातिशयोक्तिश्चेति । तत्राद्या द्विविधा—शुद्धा सापह्नवा चेति । तत्र शुद्धां लक्षयति—रूपकातिशयोक्तिरिति । निगीर्य विषयनिगरणं कृत्वा अध्यवसानतः विषयिरूपेण विषयस्य निश्चयाद्रूपकातिशयोक्तिस्स्यात् । यत्रोपमेयं मुखादिकं तद्वाचिमुखादिपदेनानुपादाय उपमानपद्मादिपदैरुपादानपूर्वकं पद्मादिरूपेणावधार्यते तत्र रूपकातिशयोक्तिरलङ्कारः

सापह्नवातिशयोक्त्यलङ्कारः ॥

यद्यपह्नुतिगर्भत्वं सैव सापह्नवा मता ।
त्वत्सूक्तिषु सुधा राजन् भ्रान्ताः पश्यन्ति तां विधौ ॥

(भेदकातिशयोक्त्यलङ्कारः)

भेदकातिशयोक्तिस्स्यात्तस्यैवान्यत्ववर्णनम् ।

---

इति निष्कर्षः । उदाहरति—पश्येति । हे सखि नीलोत्पलद्वन्द्वात् कुवलयद्वन्द्वात् शिताः तीक्ष्णाः शराः बाणाः निस्सरन्ति निर्गच्छन्ति पश्य । इदमाश्चर्यं विलोकयेत्यर्थः ॥ अत्र कान्ताया लोचनयुगळात् कटाक्षाः निर्गच्छन्तीति वक्तव्ये लोचनकटाक्षाणां तद्वाचिपदेनोपादानं विना तदुपमाननीलोत्पलशरशब्दाभ्यामुपादानपूर्वकं नीलोत्पलशरत्वेनाध्यवसानादियं रूपकातिशयोक्तिः ॥ ३१

सापह्नवातिशयोक्तिं लक्षयति—यदीति । अपह्नुतिगर्भत्वं यदि रूपकातिशयोक्तेरपह्नवघटितत्वं चेदित्यर्थः ॥ सैव रूपकातिशयोक्तिरेव सापह्नवा सापह्नवरूपकातिशयोक्तिरिति कवीनां मतेत्यर्थः ॥ उदाहरति—त्वदिति । हे राजन् त्वत्सूक्तिषु भवदीयमृदुवाक्येष्वेव सुधा स्थितेति शेषः । त्वदीयमधुरवचस्येवामृतं वर्तते नान्यत्रेत्यर्थः ॥ ननु चन्द्रे सुधास्तीति प्रवादः कथमित्यत आह—भ्रान्ता इति । भ्रान्ताः अज्ञानोपहताः जनाः विधौ चन्द्रे तां सुधां पश्यन्ति चन्द्रे सुधास्तीति व्यवहारो भ्रममूलक एवेत्यर्थः ॥ अत्र सा चन्द्रे गता सुधा न भवतीत्यपह्नवगर्भेति सापह्नवा ॥ ३२

अथ भेदकातिशयोक्तिं लक्षयति—

भेदकातिशयोक्तिरिति । तस्यैव लोकसिद्धस्यैव अन्यत्ववर्णन

अन्यदेवास्य गाम्भीर्यमन्यद्धैर्यं महीपतेः ॥ ३३

(सम्बन्धातिशयोक्त्यलङ्कारः)

सम्बन्धातिशयोक्तिस्स्यादयोगे योगकल्पनम् ।
सौधाग्राणि पुरस्यास्य स्पृशन्ति विधुमण्डलम् ॥ ३४

(असम्बन्धातिशयोक्त्यलङ्कारः)

योगेऽप्ययोगोऽसम्बन्धातिशयोक्तिरितीष्यते ।
त्वयि दातरि राजेन्द्र स्वर्द्रुमान्नाद्रियामहे ॥ ३५

---

मिति यत् सा भेदकातिशयोक्तिस्स्यादित्यर्थः ॥ उदाहरति—अन्यदिति । अस्य महीपतेः गाम्भीर्यमन्यदेव लोकविलक्षणमेव । तथा धैर्यमप्यन्यदेव लोकविलक्षणमेव । अत्र राजगाम्भीर्यधैर्ययोः लोकसाधारणसत्वेपि तद्भेदो वर्णितः ॥ ३३

सम्बन्धातिशयोक्तिरिति । अयोगे असम्बन्धे योगकल्पनं सम्बन्धवर्णनामिति यत् सा सम्बन्धातिशयोक्तिस्स्यात् । उदाहरति—सौधाग्राणीति । अस्य पुरस्य सौधाग्राणि राजगृहशिखराणि विधुमण्डलं चन्द्रमण्डलं स्पृशन्ति तादृगुन्नतानि भवन्तीत्यर्थः ॥ अत्र सौधाग्राणां विधुमण्डलस्पर्शासम्बन्धेपि तत्सम्बन्धो वर्णितः ॥ ३४

अथासम्बन्धातिशयोक्तिं लक्षयति—

योगेऽपीति । योगे सम्बन्धे सत्यपि अयोगोऽसम्बन्धवर्णनमितियत् सा असम्बन्धातिशयोक्तिरिष्यते कथ्यते । उदाहरति—त्वयीति । हे राजेन्द्र सकलपृथ्वीपालकेन्द्र रामचन्द्र त्वयि दातरि

(अक्रमातिशयोक्त्यलङ्कारः) ॥

**अक्रमातिशयोक्तिस्स्यात्सहत्वे हेतुकार्ययोः ।**
**आलिङ्गन्ति समं देव ज्यां शराश्च पराश्च ते ॥** ३६

(चपलातिशयोक्त्यलङ्कारः) ॥

**चपलातिशयोक्तिस्स्यात्सहत्वे हेतुप्रसक्तिजे ।** कार्ये
**यास्यामीत्युदिते तन्व्या वलयोऽभवदूर्मिका ॥** ३७

---

वितरणशालिनि सति वयं स्वर्द्रुमान् कल्पवृक्षान् नाद्रियामहे न याचामहे भवदीयवितरणे दृष्टे सति कल्पवृक्षेष्वप्यादरो नास्तीत्यर्थः । अत्र स्वर्द्रुमेष्वादरसम्बन्धेऽपि तदसम्बन्धवर्णनादसम्बन्धातिशयोक्तिः॥

अक्रमातिशयोक्तिं लक्षयति—अक्रमातिशयोक्तिरिति । हेतुकार्ययोस्सहत्वे यौगपद्ये वर्णिते सति अक्रमातिशयोक्तिः । कारणं पूर्वं कार्यं परमिति लोकमर्यादा तामुल्लङ्घ्य यत्र कार्यकारणयोरेककालत्वं वर्ण्यते तत्राक्रमातिशयोक्तिरित्यर्थः । उदाहरति—आलिङ्गन्तीति । हे देव रामस्वामिन् ते तव शराः पराश्शत्रवश्च ज्यां समं युगपदालिङ्गन्ति । शरपक्षे ज्यां मौर्वीं शत्रुपक्षे ज्यां भूमिं आलिङ्गन्तीत्यर्थः । अत्र शरसन्धानरूपकारणस्य परेषां भूपतनकार्यस्य च पौर्वापर्यक्रमं विहाय यौगपद्यवर्णनादक्रमातिशयोक्तिः ॥ ३६

चपलातिशयोक्तिं लक्षयति—चपलातिशयोक्तिरिति । कार्ये हेतुप्रसक्तिजे सति हेतुप्रसक्तिमात्रेण कार्ये जाते सति चपलातिशयोक्तिः । यत्र कारणे भविष्यत्येवकार्यं वर्ण्यते तत्र चपलातिशयोक्तिः उदाहरति—यास्यामीति । अहं यास्यामि गमिष्यामीति नायकेन

(अत्यन्तातिशयोक्त्यलङ्कारः) ॥

अत्यन्तातिशयोक्तिस्स्यात्पौर्वापर्यव्यतिक्रमे ।
अग्रे मानो गतः पश्चादनुनीता प्रियेण सा ॥ ३८

१४. तुल्ययोगितालङ्कारः (तद्भेदाः) ॥

वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगिता ।
संकुचन्ति सरोजानि स्वैरिणीवदनानि च ॥ ३९

---

उदिते उक्ते सति तन्व्याः प्रियायाः ऊर्मिका अङ्गुलीयकं वलयः कङ्कणमभवत् । नायकप्रयाणश्रवणे सति तत्क्षणएव भाविविरहप्रतिसन्धानजनितखेदात्यन्तकृशायाः तस्याः करे अङ्गुलिप्राये सति ऊर्मिका कङ्कणमभूदित्यर्थः । अत्र हेतुभूतस्य नायकप्रयाणस्य प्रसङ्गमात्रेण तत्कार्यस्य कार्यमुखेन वर्णनाच्चपलातिशयोक्तिः ॥ ३७

अत्यन्तातिशयोक्तिं लक्षयति—अत्यन्तातिशयोक्तिरिति । तयोः कारणकार्ययोः यत्पौर्वापर्यं पूर्वोत्तरभावः तस्य व्यतिक्रमे उल्लङ्घने सति अत्यन्तातिशयोक्तिः । कारणं पूर्वं कार्यं परमिति नियममुल्लङ्घ्य वैपरीत्येन कार्यं पूर्वं कारणं परमिति यत्र वर्ण्यते तत्रात्यन्तातिशयोक्तिस्स्यादित्यर्थः । उदाहरति—अग्र इति । मानः प्रणयकोपः अग्रे प्रथममेव अनुनयात्प्रागेवेत्यर्थः । गतोऽपसृतः पश्चान्मानत्यागानन्तरं सा कान्ता प्रियेण अनुनीता उपलालिता ॥ ३८

तुल्ययोगितां लक्षयति—सा त्रिविधा वर्ण्यावर्ण्यैकधर्मान्वयरूपा । हिताहितवृत्तितौल्यरूपा । उत्कृष्टसमीकरणोक्तिरूपा चेति । तत्राद्यां लक्षयति—वर्ण्यानामिति । वर्ण्यानां प्रकृतानामितरेषामप्रकृतान

त्वदङ्गमार्दवे दृष्टे कस्य चित्ते न भासते ।
मालतीशशभृल्लेखाकदळीनां कठोरता ॥ ४०

हिताहिते वृत्तितौल्यमपरा तुल्ययोगिता ।
प्रदीयते पराभूतिर्मित्रशात्रवयोस्त्वया ॥ ४१

वा धर्मैक्यं एकधर्मत्वं तुल्ययोगितेत्यर्थः ॥ इयमपि पुनर्द्विविधा केवलप्रकृतगोचरा । केवलाप्रकृतगोचरा चेति । यत्र केवलप्रकृतानामेकधर्मान्वयः तत्र केवलप्रकृतगोचरा । यत्र केवलाप्रकृतानामेकधर्मान्वयः तत्र केवलाप्रकृतगोचरा । उदाहरति—संकुचन्तीति । चन्द्रोदयप्रस्तावाच्चन्द्रोदय इति पूरणीयं । सरोजानि पद्मानि स्वैरिणीवदनानि जारस्त्रीमुखानि च संकुचन्ति पद्मेषु संकोचो मुकुळनं वदनेषु वैवर्ण्यं । चन्द्रोदयस्य स्वेच्छया कामुकस्थानगमनविरोधित्वात् । अत्र चन्द्रोदयवर्णनप्रस्तावात्तत्कार्यत्वेन स्वैरिणीमुखसरोजसङ्कोचवर्णनस्य प्रकृतत्वाद्वर्ण्यानां सङ्कोचक्रियारूपैकधर्मान्वयः । अतः प्रकृतगोचरा तुल्ययोगिता ॥ ३९

अथ केवलाप्रकृतगोचरामुदाहरति—त्वदिति । हे प्रिये त्वदङ्गमार्दवे दृष्टे सति कस्य वा चित्ते मालतीशशभृल्लेखाकदळीनां सुमनोलताचन्द्ररेखारम्भाणां कठोरता काठिन्यं न भासते न स्फुरति । त्वद्देहसौकुमार्यदर्शिनां मालत्यादिषु अतीवानादरो भवतीत्यर्थः ॥ अत्रोपमानत्वेन अप्रकृतानां मालत्यादीनां तिरस्काररूपैकक्रियान्वयः॥

द्वितीयं लक्षयति—हिताहित इति । हिताहिते मित्रेऽमित्रे चेत्यर्थः ॥ वृत्तितौल्यं व्यापारसाम्यमेकविधव्यापार इति यावत् ।

गुणोत्कृष्टैस्समीकृत्य वचोऽन्या तुल्ययोगिता ।
लोकपालो यमः पाशी श्रीदश्शक्रो भवानपि ॥ ४२

१५. दीपकालङ्कारः ॥

वदन्ति वर्ण्यावर्ण्यानां धर्मैक्यं दीपकं बुधाः ।
मदेन भाति कलभः प्रतापेन महीपतिः ॥ ४३

---

अपरा अन्या तुल्ययोगिता । यत्र शत्रुमित्रयोर्विषये एक व्यापारो वर्ण्यते तत्रान्या तुल्ययोगितेत्यर्थः ॥ उदाहरति—प्रदीयत इति । हे राजन् त्वया मित्रशात्रवयोः सुहृद्विषोर्विषये मित्रेभ्यश्शत्रुभ्यश्चेत्यर्थः ॥ पराभूतिरुत्कृष्टैश्वर्यं पराभवश्च प्रदीयते वितीर्यते। अत्रोत्कृष्टभूतिदानस्य पराभवदानस्य च श्लेषेणाभेदाध्यवसायाच्छत्रुमित्रविषयपराभूतिदानरूपव्यापारस्तुल्य इति लक्षणसङ्गतिः ॥ ४१

तृतीयं लक्षयति—गुणोत्कृष्टैरिति । गुणोत्कृष्टैश्शौर्यौदार्यादिगुणगरिष्ठैः समीकृत्य समानीकृत्य वचः उक्तिः अपरा तुल्ययोगिता । यत्र वर्णनीयो राजादिः उत्कृष्टगुणैरिन्द्रादिभिस्सह धर्मतः समानीकृत्य वर्ण्यते तत्रान्या तुल्ययोगितेत्यर्थः ॥ उदाहरति—लोकपाल इति । हे प्रभो ! यमः अन्तकः पाशी वरुणः श्रीदः कुबेरः शक्रः इन्द्रः भवानपि त्वं च लोकपालः । लोकपालसाम्येनैव त्वं लोकं पालयसीत्यर्थः ॥ अत्रोत्कृष्टैश्शक्रादिभिः प्रभोर्लोकपालत्वेन समीकृत्य वर्णनात्तुल्ययोगिता ॥ ४२

अथ दीपकं लक्षयति—वदन्तीति । वर्ण्यावर्ण्यानां प्रकृताप्रकृतानां धर्मैक्यं एकधर्मान्वयं दीपकं बुधाः वदन्ति दीपकमिति

## १६. आवृत्तिदीपकालङ्कारः (तद्भेदाः) ॥

त्रिविधं दीपकावृत्तौ भवेदावृत्तिदीपकम् ।
वर्षत्यम्बुदमालेयं वर्षत्येषा च शर्वरी ॥ ४४
उन्मीलन्ति कदम्बानि स्फुटन्ति कुटजोद्गमाः ।

सहृदयाः कथयन्तीत्यर्थः । उदाहरति—मदेनेति । मदेन कलभः गजपोतः भाति शोभते महीपतिः राजा प्रतापेन शौर्येण भाति । अत्र वर्ण्यो राजा अवर्ण्यः कलभः उभयोरपि भातीति शोभारूपैकधर्मान्वयः । तेन उभयोस्सादृश्यं गम्यते । अत्र धर्मस्य दीपइवानेकत्रान्वयाद्दीपकमित्यन्वर्थसंज्ञा ॥ ४३

आवृत्तिदीपकं लक्षयन् विभजते—त्रिविधमिति । दीपस्य अनेकोपकारकत्वाद्दीपस्थानीयस्य पदस्य वा अर्थस्य वा पदार्थयोर्वा आवृत्तौ सत्यां क्रमेण पदावृत्तिदीपकमर्थावृत्तिदीपकं शब्दार्थोभयावृत्तिदीपकं चेति त्रिविधमावृत्तिदीपकं भवेदित्यर्थः । तत्राद्यामुदाहरति—वर्षतीति । वर्षासमये विरहतप्ता काचित्काञ्चिदाह—इयं पुरोवर्तिनी अम्बुदमाला मेघपङ्क्तिः वर्षति जलं मुञ्चतीत्यर्थः । एषा वर्तमाना शर्वरी रात्रिश्च वर्षति । वर्षस्संवत्सरइवाचरति । विरहतप्तानां रात्रौ निद्राभावाच्चिरकालेनापि तदनपगमाद्रात्रिस्संवत्सरप्राया भवतीत्यर्थः । अत्र वर्षतीत्येकं पदं वाक्यद्वये वर्तते अर्थस्य भिन्नत्वात् पदावृत्तिदीपकम् ॥ ४४

द्वितीयमुदाहरति—उन्मीलन्तीति । कदम्बानि कदम्बकुसु-

माद्यन्ति चातकास्तृप्ता माद्यन्ति च शिखावळाः ॥ ४५

१७. प्रतिवस्तूपमालङ्कारः ॥

वाक्ययोरेकसामान्ये प्रतिवस्तूपमा मता ।
तापेन भ्राजते सूरः शूरश्चापेन राजते ॥ ४६

---

मानि उन्मीलन्ति विकसन्ति तथा कुटजोद्गमाः गिरिमल्लिकाः स्फुटन्ति विकसन्ति । शब्दयोः भेदेऽपि विकासरूपार्थस्य एकत्वात्तस्यावृत्तत्वेन इदमर्थावृत्तिदीपकम् ॥

तृतीयमुदाहरति—माद्यन्तीति । चातकाः तृप्ताः अन्तराळ एव मेघोदकपानेन सन्तुष्टास्सन्तः माद्यन्ति मदं गच्छन्ति । तथा शिखावळा मयूराश्च माद्यन्ति । अत्र मदप्राप्तिरूपस्य अर्थस्य माद्यन्तीति पदस्य उभयस्याप्यावृत्तत्वादुभयावृत्तिदीपकम् ॥ ४५

अथ प्रतिवस्तूपमां लक्षयति—वाक्ययोरिति । वाक्ययोः उपमानोपमेयवाक्ययोः एकसामान्ये एकसामान्यधर्मस्यान्वये सति प्रतिवस्तूपमा मता इष्टा । यत्रोपमानोपमेयपदघटितवाक्ययोरेकः साधारणधर्मः पृथङ्निर्दिश्यते शब्दभेदेन प्रतिपाद्यते तत्र प्रतिवस्तूपमेत्यर्थः । उदाहरति—तापेनेति । सूरस्सूर्यः तापेनातपेन भ्राजते प्रकाशते । शूरः वीरपुरुषः चापेन धनुषा राजते प्रकाशते । तेन उभयोस्साम्यं गम्यते । सूर उपमानं शूर उपमेयं तत्प्रतिपादकवाक्ययोरेकः प्रकाशनरूपस्साधारणधर्मः राजते भ्राजते इति भिन्नपदाभ्यां निर्दिश्यत इति प्रतिवस्तूपमा । प्रतिवस्तु प्रतिवाक्यार्थं उपमा साधारणधर्मः यस्यास्सा इति व्युत्पत्तेरन्वर्थसंज्ञा ॥ ४६

## १८. दृष्टान्तालङ्कारः ॥

चेद्बिम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलङ्कृतिः ।
त्वमेव कीर्तिमान्राजन्विधुरेव हि कान्तिमान् ॥ ४७

## १९. निदर्शनालङ्कारः (तद्भेदाः)

वाक्यार्थयोस्सदृशयोरैक्यारोपो निदर्शना ।
यद्दातुस्सौम्यता सेयं पूर्णेन्दोरकळङ्कता ॥ ४८

---

अथ दृष्टान्तं लक्षयति—चेदिति । अत्र वाक्ययोरित्यनुषज्यते। वाक्ययोः बिम्बप्रतिबिम्बत्वं चेत् वस्तुतो भिन्नत्वेऽपि सादृश्यादभिन्नयोर्धर्मयोस्सामान्यधर्मत्वेन पृथग्वाक्यद्वयेन निर्देशो यदि तत्तर्हि दृष्टान्तालङ्कृतिरित्यर्थः ॥ यत्र वाक्यद्वये भिन्नावेव धर्मौ बिम्बप्रतिबिम्बभावेन पृथङ्निर्दिष्टौ तत्र दृष्टान्तालङ्कारइति निष्कर्षः । उदाहरति—त्वमिति । हे राजन् ! त्वमेव कीर्तिमान् विधुश्चन्द्रएव कान्तिमान् अत्रोपमेयभूतो राजा उपमानभूतो विधुः तद्वाक्ययोर्भिन्नयोरपि कीर्तिकान्त्योस्सादृश्यादभिन्नयोस्सामान्यधर्मत्वेन पदभेदेन निर्देशाद्दृष्टान्तालङ्कारः ॥ ४७

अथ निदर्शना । सा च त्रिविधा । वाक्यार्थवृत्तिनिदर्शना । पदार्थवृत्तिनिदर्शना। सदसदर्थबोधनरूपा चेति । तत्राद्यां लक्षयति—वाक्यार्थयोरिति । सदृशयोर्वाक्यार्थयोरैक्यारोपः अभेदारोप इति यत् सा निदर्शनेत्यर्थः ॥ उदाहरति—यदिति । दातुर्वितरणशीलस्य सौम्यता अपरुषत्वमिति यत् सेयं सौम्यता पूर्णेन्दोः राकाचन्द्रस्य अकळङ्कता कळङ्कराहित्यं यथा पूर्णेन्दोरकळङ्कत्वमसम्भावितं तथा

पदार्थवृत्तिमप्येके वदन्त्यन्यां निदर्शनाम् ।
त्वन्नेत्रयुगळं धत्ते लीलां नीलाम्बुजन्मनोः ॥ ४९

अपरां बोधनं प्राहुः क्रिययाऽसत्सदर्थयोः ।
नश्येद्राजविरोधीति क्षीणं चन्द्रोदये तमः ॥ ५०

---

दातुरपि सौम्यता असम्भाविता यो दानशीलः तस्य विनयसम्पत्तिर्दुर्लभेति यावत् । इदं च धनलिप्सया दातारं प्रति गत्वा तस्मिन्नधिक्षिपति सति निर्विण्णस्य याचकस्य वचनं । अत्र दातृसौम्यत्वपूर्णेन्दुकळङ्कविधुरत्वयोः वाक्यार्थयोर्यत्तच्छब्दाभ्यामैक्यारोपादियं वाक्यार्थवृत्तिनिदर्शना ॥ ४८

द्वितीयं लक्षयति—पदार्थवृत्तिमिति । एके केचिदालङ्कारिकाः पदार्थवृत्तिमपि निदर्शनामन्यां वदन्ति । यत्रान्यस्मिन् पदार्थेऽन्यधर्मस्य आरोपो वर्ण्यते सा पदार्थवृत्तिनिदर्शनेत्यर्थः ॥ उदाहरति—त्वदिति । हे कान्ते त्वन्नेत्रयुगळं नीलाम्बुजन्मनोः नीलाब्जयोः लीलां विलासं धत्ते अत्रान्यधर्मस्य लीलारूपस्य अन्यस्मिन् नयनयुगळे असम्भवतोपि स्थितिवर्णनादियं पदार्थवृत्तिनिदर्शना ॥ ४९

तृतीयं लक्षयति—अपरामिति । यत्किञ्चित्क्रियाविशिष्टस्य कस्यचिदर्थस्य क्रियया असत्सदर्थयोरसदर्थस्य सदर्थस्य बोधनं ज्ञापनमिति यत् । तदपरां निदर्शनामेके आहुः । अयमत्र निष्कर्षः । यः कश्चिदर्थः काञ्चित्क्रियां कुर्वन् सन् तया क्रियया दृष्टान्तभूतया परान्प्रति असन्तं सन्तं वा अर्थं ज्ञापयंत्सन्निबद्धश्चेत्तद्बोधनमप्यन्यां निदर्शनामन्ये मन्यन्ते इति । तथा च असदर्थबोधनरूपा

उदयन्नेव सविता पद्मेष्वर्पयति श्रियम् ।
विभावयंत्समृद्धीनां फलं सुहृदनुग्रहम् ॥ ५१

## २०. व्यतिरेकालङ्कारः ॥

व्यतिरेको विशेषश्चेदुपमेयोपमानयोः ।

---

सदर्थबोधनरूपा चेति द्विविधा । तत्राद्यामुदाहरति—नश्येदिति । चन्द्रोदये तमः राजविरोधि नश्येत् नाशं प्राप्नुयादिति बोधयदेव क्षीणं नष्टमभूदित्यक्षरार्थः । बोधयदित्यस्य इतिनैव गम्यमानत्वादप्रयोगः । अयमर्थः । राज्ञा चन्द्रेण सह विरोधि तमः स्वयं क्षीणं सत् स्वनाशक्रियया दृष्टान्तभूतया यः कोप्यहमिव राजविरोधी चेत् नश्येदिति परान्प्रत्यनर्थपर्यवसायिनमर्थं ज्ञापयत्सदेव नष्टमभूदिति । अत्र राजविरोध्येवं नश्येदिति असदर्थबोधकत्ववर्णनादियमसदर्थबोधनरूपा निदर्शना ॥ ५०

अथ द्वितीयामेकेन श्लोकेनोदाहरति—उदयन्निति । सविता सूर्यः उदयन् प्रादुर्भवन् अभ्युदयं गच्छंत्सन्नेव समृद्धीनां सम्पदां सुहृदनुग्रहं फलं विभावयन् परान्प्रति बोधयन् पद्मेषु श्रियं कान्तिं समृद्धिं च अर्पयति ददाति । अयमर्थः । सविता स्वस्योदयसमय एव पद्मेषु लक्ष्मीं निदधानस्सन् तया लक्ष्म्याधानक्रियया समृद्धीनां सुहृदनुग्रहएव मुख्यं फलं अन्योऽपि स्वोदयकाल एव स्वसुहृद्भ्यः अहमिव समृद्धिं दद्यादिति परान्प्रति श्रेयस्करमर्थं बोधयन्निबद्ध इति इयं सदर्थबोधनरूपा निदर्शना ॥ ५१

अथ व्यतिरेकं लक्षयति—व्यतिरेक इति । उपमेयोपमा-

शैला इवोन्नतास्सन्तः किं तु प्रकृतिकोमलाः ॥ ५२

२१. सहोक्त्यलङ्कारः ॥

सहोक्तिस्सहभावश्चेद्भासते जनरञ्जनः ।
दिगन्तमगमत्तस्य कीर्तिः प्रत्यर्थिभिस्सह ॥ ५३

२२. विनोक्त्यलङ्कारः (तद्भेदाः) ॥

विनोक्तिश्चेद्विना किंचित्प्रस्तुतं हीनमुच्यते ।

---

नयोः विशेषः वैलक्षण्यं वर्णितं चेदयं व्यतिरेक इत्यर्थः । अयं त्रिप्रकारः । उपमेयाधिक्यपर्यवसायी । उपमेयन्यूनत्वपर्यवसायी । अनुभयपर्यवसायी चेति । तत्राद्यमुदाहरति—शैला इति । सन्तः सत्पुरुषाः शैलाः पर्वता इवोन्नताः किं तु प्रकृत्या कोमलाः शैलास्तु प्रकृतिकठिना इति भावः । अत्रोपमानशैलापेक्षया प्रकृतिकोमलत्वेन सतामाधिक्यवर्णनादयमुपमेयाधिक्यपर्यवसायी व्यतिरेकः । एवमन्यत्राप्यूहनीयम् ॥ ५२

सहोक्तिं लक्षयति—सहोक्तिरिति । जनरञ्जनः लोकानन्दकरः सहभावः साहित्यं भासते चेत्सहोक्तिर्नामालङ्कार इति निष्कर्षः । यत्र सहृदयहृदयाह्लादकरः कस्यचित्केनचित्सहभावः वर्ण्यते तत्र सहोक्तिः जनरञ्जन इति विशेषणादनेन सार्थमित्यादिप्रयोगे न सहोक्तिः । तत्र सहभावस्य चमत्कारकारित्वाभावात् । उदाहरति—दिगन्तमिति । तस्य राज्ञः कीर्तिः प्रत्यर्थिभिः शत्रुभिस्सह दिगन्तमगमत् प्राप्ता । अत्र यदा निजप्रतापादिजनिता कीर्तिर्दिगन्तं व्याप्ता तदानीमेव शत्रवः पलाय्य दिगन्तानेव प्राप्ता इत्येवंविधतात्पर्यगर्भत्वेन चमत्कारकारिणस्सहभावस्य वर्णनात्सहोक्तिः ॥ ५३

अथ विनोक्तिः—सा च द्विधा । किञ्चिद्विना हेयस्वरूपा

विद्या हृद्यापि सावद्या विना विनयसम्पदम् ॥ ५४
तच्चेत्किञ्चिद्विना रम्यं विनोक्तिस्सापि कथ्यते ।
विना खलैर्विभात्येषा राजेन्द्र भवतस्सभा ॥ ५५

२३. समासोक्त्यलङ्कारः ॥

समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत् ।
अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः ॥ ५६

---

किञ्चिद्विना रम्यस्वरूपा चेति । आद्यां लक्षयति—विनोक्तिरिति । किञ्चिद्विना प्रस्तुतं वर्ण्यं हीनं निकृष्टं उच्यते चेत् हीनत्वेन वर्ण्यते यदीत्यर्थः ॥ तर्हि विनोक्तिर्नामालङ्कारः । उदाहरति—विद्येति । हृद्या मनोहरापि या विद्या विनयसम्पदं विना विनयसमृद्धिमन्तरावर्तत इति शेषः । सा अवद्या दुष्टा । अत्र विद्यायाः विनयसम्पत्तिं विना हैन्यवर्णनाद्विनोक्तिः ॥ ५४

द्वितीयां लक्षयति—तदिति । तत् प्रस्तुतं किञ्चिद्वस्तु विना रम्यं चेत् सुन्दरं यदि तर्हि साऽपि विनोक्तिरिति कथ्यत इत्यर्थः ॥ उदाहरति—विनेति । हे राजेन्द्र ! भवत एषा सभा आस्थानमण्डपः खलैर्विना दुर्जनसम्पर्कं विना विभाति । अत्र सभायाः खलसम्पर्कं विना रम्यत्ववर्णनाद्विनोक्तिः ॥ ५५

अथ समासोक्तिं लक्षयति—समासोक्तिरिति । प्रस्तुते प्रस्तुतवृत्तान्ते वर्णिते सति अप्रस्तुतस्याप्रकृतस्य परिस्फूर्तिश्चेत् प्रतीतिर्यदि तर्हि समासोक्तिः । समासेन संक्षेपेण प्रकृताप्रकृतवृत्तान्तवर्णनादियमन्वर्थसंज्ञा । उदाहरति—अयमिति । कस्यचित्कामुकस्य काञ्चि-

२४. परिकरालङ्कारः ॥

अलङ्कारः परिकरस्साभिप्रायविशेषणैः ।
सुधांशुकलितोत्तंसस्तापं हरतु वश्शिवः ॥ ५७

२५. परिकराङ्कुरालङ्कारः ॥

साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुरः ।

---

त्कामुकीमुद्दिश्य इयमुक्तिः । हे प्रिये ! अयं परिदृश्यमानः चन्द्रमाश्चन्द्रः रक्तलोहितस्सन्नैन्द्र्याः प्राच्याः मुखं अग्रभागं चुम्बति स्पृशति पश्य विलोकयेति प्रस्तुते वृत्तान्ते वर्ण्यमाने मुखशब्दस्य प्रारम्भवदनसाधारण्यात् चुम्बतीत्यस्य संस्पर्शवदनसंयोगसाधारण्याद्रक्तशब्दस्य लोहितकामुकसाधारण्याच्चन्द्रमश्शब्दगतपुल्लिङ्गेन ऐन्द्रीशब्दगतस्त्रीलिङ्गेन च रक्तः कामुकस्सन् ऐन्द्र्याः इन्द्रसम्बन्धोपस्कृतपराङ्गनायाः मुखं वदनं चुम्बति स्ववदनेन तद्वदनं संयोजयतीत्येवं प्रकारः इन्द्रसम्बन्धोपस्कृतपरवनितासक्तकामुकवृत्तान्तः प्रतीयत इति समासोक्तिः ॥ ५६

परिकरं लक्षयति—

अलङ्कार इति । साभिप्रायविशेषणैः अर्थविशेषविषयकतात्पर्यगर्भैर्विशेषणैर्हेतुभिः परिकरः परिकराख्योऽलङ्कारः यत्र साभिप्रायविशेषणानि प्रयुज्यन्ते तत्र परिकरालङ्कार इत्यर्थः॥ उदाहरति—सुधांश्विति । सुधांशुकलितः चन्द्रकृतः उत्तंसः शेखरो यस्य सः तथोक्तः शिवः वः तापं मनस्तापं हरतु निवर्तयतु । अत्र सुधांशुकलितेत्यादि विशेषणं तापहरणसामर्थ्याभिप्रायगर्भं अतः परिकरः ॥

परिकराङ्कुरं लक्षयति—

साभिप्राय इति । विशेष्ये तु साभिप्राये सति परिकराङ्कुरः

चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः ॥ ५८

२६. श्लेषालङ्कारः (तद्भेदाः)

नानार्थसंश्रयः श्लेषो वर्ण्यावर्ण्योभयाश्रितः ॥
सर्वदो माधवः पायात्सयो(ऽ)गङ्गामदीधरत् ॥ ५९
अब्जेन त्वन्मुखं तुल्यं हरिणा हितसक्तिना ।
उच्चरद्भूरिकीलालश्शुशुभे वाहिनीपतिः ॥ ६०

---

रव्योलङ्कारो भवेत् । यत्र विशेष्यमभिप्रायगर्भं स्यात्तत्र परिकराङ्कुरस्स्यादित्यर्थः । उदाहरति—चतुर्णां पुरुषार्थानां धर्मार्थकाममोक्षाणां दाता देवः तद्दानसमर्था देवता चतुर्भुजः विष्णुरेव । अत्र चतुर्भुजत्वाद्विष्णुरेव युगपच्चतुर्विधपुरुषार्थप्रदानसमर्थः नान्यो देव इत्यभिप्रायगर्भं चतुर्भुज इति विशेष्यम् ॥ ५८

अथ श्लेषः । स च त्रिविधः । प्रकृतानेकगोचरः । अप्रकृतानेकगोचरः । प्रकृताप्रकृतानेकगोचरश्चेत्यभिप्रायेण तं लक्षणोक्तिपूर्वकं विभजते—नानार्थेति—नानार्थसंश्रयः अनेकार्थगोचरः वर्ण्यावर्ण्योभयाश्रयः केवलप्रकृतगोचरः । केवलाप्रकृतगोचरः । तदुभयविषयशब्दविन्यासरूपः । इति त्रिविधः । श्लेष इत्यर्थः । तत्र केवलप्रकृतगोचरमुदाहरति—सर्वदोमाधव इति । सर्वदः सर्वार्थप्रदः सः माधवः पायात् रक्षतु यः अगं गोवर्धनाख्यगिरिं गां भुवं अदीधरत् भृशं बिभर्ति स्म । शिवपक्षे तु उमाधवः सर्वदा पायात् यः शिवः गङ्गां अदीधरत् शिरसा वहति स्म ॥ ५९

द्वितीयमुदाहरति—अब्जेनेति । हे प्रिये! हरिणा सूर्येण

## २७. अप्रस्तुतप्रशंसालङ्कारः ॥

अप्रस्तुतप्रशंसा स्यात्सा यत्र प्रस्तुताश्रया ।
एकः कृती शकुन्तेषु योऽन्यं शक्रान्नयाचते ॥ ६१

आहिता निहितासक्तिरासक्तिर्यस्य तेन अब्जेन पद्मेन । तथा हरिणेन मृगेण आहितासक्तिर्यस्य तेन अब्जेन चन्द्रेण च त्वन्मुखं त्वद्वदनं तुल्यं समं । अत्र अब्जपदस्योपमानत्वेन अप्रकृतपद्मचन्द्रगोचरत्वादप्रकृतश्लेषः । अत्राब्जेनेत्यत्र एकनाळावलम्बिफलद्वयवदर्थद्वयप्रतीतेरर्थश्लेषः ।

तृतीयमुदाहरति—उच्चरदिति । उच्चरदुद्गच्छत् भूरि बहुलं कीलालं शोणितं यस्य सः 'शोणितेऽम्भसि कीलालमि'त्यमरः । वाहिनीपतिः सेनापतिः शुशुभे दिदीपे तथा उज्जृम्भमाणं भूरिकीलालमुदकं यस्य सः वाहिनीपतिः समुद्रः शुशुभे । अत्र सेनापतेः प्रकृतत्वं समुद्रस्याप्रकृतत्वमतः प्रकृताप्रकृतगोचरश्लेषः ॥ ६०

अथाप्रस्तुतप्रशंसां लक्षयति—अप्रस्तुतप्रशंसेति । तत्राप्रस्तुतप्रशंसा स्यादिति योजना । प्रथमं ज्ञेया कुत्रेत्यत्राह—नेति । यत्र सा अप्रस्तुतप्रशंसा अप्रस्तुतवृत्तांतवर्णनं प्रस्तुताश्रया प्रस्तुतवृत्तान्त प्रतीतिपर्यवसायिनी स्यादिति सम्बन्धः । यत्र प्रस्तुतवृत्तान्तप्रत्यायनायाप्रस्तुतवृत्तान्तो वर्ण्यते तत्राप्रस्तुतप्रशंसाख्योऽलङ्कार इति निष्कर्षः । अत्राप्रस्तुतसामान्यात्प्रस्तुतविशेषप्रतीतिः । अप्रस्तुतविशेषात्प्रस्तुतसामान्यप्रतीतिः । अप्रस्तुतकारणात् प्रस्तुतकार्यप्रतीतिः। अप्रस्तुतकार्यात्प्रस्तुतकारणप्रतीतिः । अप्रस्तुतसरूपात्प्रस्तुतसरूपप्रतीतिश्चेत्यप्रस्तुत-

## २८. प्रस्तुताङ्कुरालङ्कारः ॥

**प्रस्तुतेन प्रस्तुतस्य द्योतने प्रस्तुताङ्कुरः ।**
**किं भृङ्ग सत्यां मालत्यां केतक्या कण्टकेद्ध्या ॥ ६२**

प्रशंसा पञ्चप्रकारा । तत्र सारूप्यनिबन्धनाप्रस्तुतप्रशंसामुदाहरति— एक इति । यश्चातकः शक्रादिन्द्रादन्यमितरं प्रभुं न याचते । 'सर्वं सहापतितमम्बु न चातकानामि'ति वचनादिन्द्रो यदा वर्षति तावत्पर्यन्तं प्रतीक्ष्य तदुत्सृष्टोदकमन्तराळएव चातको गृह्णातीति प्रसिद्धिः । सः एक एव चातकः शकुन्तेषु पक्षिषु मध्ये कृती निपुणः नत्वन्ये पक्षिण इत्यर्थः ॥ अत्र सार्वभौमं विनान्यं क्षुद्रं राजानं न प्रार्थयामीत्यभिमानशालिनो वृत्तान्तस्य वर्णनीयस्य प्रत्यायनार्थं तत्सरूपाप्रस्तुतचातकवृत्तान्तो वर्णित इतीयमप्रस्तुत-प्रशंसा । उदाहरणान्तराण्यूह्यानि ॥ ६१

अथ प्रस्तुताङ्कुरं लक्षयति—

प्रस्तुतेनेति । प्रस्तुतेन प्रस्तुतवर्णनेन प्रस्तुतस्य प्रस्तुतवृत्तान्तस्य द्योतने सति प्रस्तुताङ्कुरालङ्कारः । यत्र प्रस्तुतवृत्तान्तप्रत्यायनाय प्रस्तुतान्तरवृत्तान्त एव वर्ण्यते तत्र प्रस्तुताङ्कुरालङ्कारः ॥ उदाहरति— किमिति । हे भृङ्ग मालत्यां सुमनोलतायां सत्यां विद्यमानायां कण्टकैस्सूचिकल्पैस्सूक्ष्मावयवैरिद्धया व्याप्तया केतक्या केतकी-मुकुळेन किं? किं प्रयोजनं? अतिमृदुलां सौन्दर्यशालिनीं सुमनोलतां विहाय तीक्ष्णकण्टकावृते केतकीमुकुळे क्रीडायत्नो व्यर्थ एवेति भावः ॥ अत्रोद्याने स्वकान्तेन साकं रममाणायास्सौन्दर्या-भिमानिन्यास्स्वकान्तस्य परवनितासक्तत्वं निवर्तयितुमिच्छन्त्याः

२९. पर्यायोक्तालङ्कारः (तद्भेदाः)

पर्यायोक्तं तु गम्यस्य वचो भङ्ग्यन्तराश्रयम् ।
नमस्तस्मै कृतौ येन मुधा राहुवधू कुचौ ॥ ६३
पर्यायोक्तं तदप्याहुर्यद्व्याजेनेष्टसाधनम् ।
यामि चूतलतां द्रष्टुं युवाभ्यामास्यतामिह ॥ ६४

---

कस्याश्चित्कामुक्या वचनमिदं । ततश्च हे कान्त ! अतिसौन्दर्यवत्यां मयि स्थितायां श्वशुरदेवरादिक्रूरजनपरिवृतायां परवनितायां किमित्यनुरक्तोसीति प्रस्तुतवृत्तान्ते वर्णनीये सति तत्प्रत्यायनार्थं तत्सरूपः प्रस्तुत एव भृङ्गवृत्तान्तो वर्णित इति भवति प्रस्तुताङ्कुरः ॥ ६२

अथ पर्यायोक्तं—

तद्विविधं । गम्यस्य रूपान्तरवर्णनरूपं व्याजेनेष्टसाधनरूपं चेति। तत्राद्यं लक्षयति—पर्यायोक्तमिति । गम्यस्य भङ्ग्यन्तराश्रयं रूपान्तरप्रतिपादकं वचनं वर्ण्यमित्येतत् पर्यायोक्तमित्यर्थः ॥ यो यद्रूपेण गम्यः तस्यैव रूपान्तरेण वर्णनमिति यत्तत्पर्यायोक्तं । उदाहरति—नम इति । तस्मै वासुदेवाय नमः यो राहुं स्वचक्रेण शिरोमात्रावशेषं कृत्वा तं तदङ्गनालिङ्गनजनितसुखान्निवर्त्य तद्वधूस्तनयोर्वैयर्थ्यं सम्पादितवान् तस्मै राहुवधूस्तनवैयर्थ्यकारिणे भगवते नम इत्यर्थः ॥ अत्र वासुदेवस्य असाधारणधर्मेण लक्ष्मीपतित्वादिना गम्यस्य राहुवधूकुचवैयर्थ्यकारित्वेन प्रतिपादनं पर्यायोक्तम् ॥ ६३

द्वितीयं लक्षयति—

पर्यायोक्तमिति । व्याजेनान्यकार्यच्छलेन इष्टस्यार्थस्य साधनमिति यत् तदपि पर्यायोक्तं कवय आहुरित्यर्थः ॥ यत्र स्वाभीष्टकार्य

३१. व्याजस्तुत्यलङ्कारः ॥

उक्तिर्व्याजस्तुतिर्निन्दास्तुतिभ्यां स्तुतिनिन्दयोः ।
कस्स्वर्धुनि विवेकस्ते नयसे पापिनो दिवम् ॥ ६५
साधु दूति पुनस्साधु कर्तव्यं किमितः परम् ।

---

कार्यान्तरव्याजेन साध्यते तदपि पर्यायोक्तमिति निष्कर्षः । उदाहरति—यामीति । कस्याश्चित्सख्याः स्वसन्निधौ लज्जापरयोर्दम्पत्योः स्वस्य चूतलतादर्शनार्थं गमनव्याजेन यथेच्छविहारसम्पादनमिच्छन्त्या इदं वचनं । अहं चूतलतां सहकारशाखां द्रष्टुं यामि गच्छामि युवाभ्यां भवद्भ्यामत्रैव कुसुमितनीरन्ध्रकुञ्जगृहे एव आस्यतां स्थीयतामिति ॥ ६४

व्याजस्तुतिं लक्षयति—

उक्तिरिति । निन्दास्तुतिभ्यां स्तुतिनिन्दयोरुक्तिः व्याजस्तुत्यलङ्कारः । यत्र निन्दाव्याजेन स्तुतिरेव क्रियते यत्र च स्तुतिव्याजेन निन्दैव क्रियते सा व्याजस्तुतिरित्यर्थः । तत्राद्यामुदाहरति—क इति । हे स्वर्धुनि गङ्गे ते तव को विवेकः· विवेको नास्तीत्यर्थः । यद्यस्मात्पापिनः पापनिलयान् दिवं स्वर्गं नयसे प्रापयसे पापिनोऽपि स्वजलस्नानात्स्वर्गं प्रापयामीति यस्तवाभिनिवेशः अयमविवेक इत्यर्थः दुष्टजनवर्धनस्यानर्हत्वादित्यापाततो भावः । अत्रोक्तनिन्दया हे गङ्गे! त्वं पापिनोऽपि स्वर्गिणः करोषि अतस्त्वत्प्रभावो निरवधिक इति स्तुतिरेव गम्यते अतो व्याजस्तुतिः । व्याजेन स्तुतिः व्याजस्तुतिरित्यन्वर्थसंज्ञा ॥ ६५

साध्विति । प्रियाविरहमसहमाना काचिन्नायिका नायकं समा-

यन्मदर्थं विलूनासि दन्तैरपि नखैरपि ॥ ६६

३१. व्याजनिन्दालङ्कारः ॥

निन्दाया निन्दया व्यक्तिर्व्याजनिन्देति गीयते ।
विधे स निन्द्यो यस्ते प्रागेकमेवाहरच्छिरः ॥ ६७

नेतुं दूतीं सम्प्रेष्य तदुपभुक्तां नखचिह्नादिभिर्ज्ञात्वा स्तुतिव्याजेन तामुपालभते—हे दूति ? साधु सम्यक् पुनरपि साधु त्वया साध्वाचरितं अतश्श्लाघ्यासीत्यर्थः । ननु मया एतत्प्रशंसार्हं किं कृतं येन श्लाघ्यास्मीत्यत आह—कर्तव्यमिति । अतः परमन्यत्किं कर्तव्यं मदर्थं मन्निमित्तं गत्वेति शेषः । दन्तैरपि नखैरपि विलूनासि च्छिन्नासि मत्प्रियकृतदन्तनखक्षतैः विदारितासीति यत् अतोऽस्मात् परमधिकं कर्तव्यं किमस्ति अतस्साधुसाध्विति स्तूयस इत्यर्थः । स्वपीडामप्यविगणय्य परकार्यप्रवृत्तः कस्य वा नाशस्य इत्यापाततोर्थः । त्वं मदर्थं न गतासि किं तु मत्कान्तेन सह रन्तुमेव गतासि धिक्त्वां दूतीमर्यादोल्लङ्घिनीमिति निन्दा गम्यत इति व्याजस्तुतिः । अत्र व्याजरूपा स्तुतिः व्याजस्तुतिः ॥ ६६

निन्दाया इति । निन्दयान्यनिन्दायाः व्यक्तिः प्रतीतिः व्याजनिन्दाख्योऽलङ्कार इति गीयते कथ्यते इत्यर्थः । उदाहरति—विधे इति । संसारनिर्विण्णस्तत्प्रवर्तकं विधिमुपालभते—हे विधे ब्रह्मन् स हरः निन्द्यः निन्दार्हः कुतः यः प्राक् पूर्वकाले ते तव एकमेव शिरः अहरत् चिच्छेद नत्वितरमस्तकचतुष्टयमपीत्यर्थः । समस्तमस्तकच्छेदे तु पुनस्संसारनिर्मातुरभावात्सर्वेऽपि संसारभारक्लेशविमुक्तास्सन्तस्सुखमाप्नुयुरित्यर्थः ॥ तव निर्मूलनसकृत्वान् स शिव

## ३२. आक्षेपालङ्कारः (तद्भेदाः)

आक्षेपस्स्वयमुक्तस्य प्रतिषेधो विचारणात् ।
चन्द्रं सन्दर्शयात्मानमथवाऽस्ति प्रियामुखम् ॥ ६८

एव निन्द्य इति श्लोकतात्पर्यं । अत्र हरनिन्दया विषमसंसारं स्रष्टुर्विधेर्निन्दाऽभिव्यज्यत इति व्याजनिन्दा भवति ॥ ६७

अथाक्षेपः—स च त्रिविधः स्वयमुक्तस्यैव विचारणात्प्रतिषेधरूपः । निषेधाभासरूपः । तिरोहितनिषेधव्यक्तविधिरूपश्चेति । तत्राद्यं लक्षयति—

आक्षेप इति । स्वयमुक्तस्य स्वेनैवोक्तस्य अर्थस्य विचारणात्प्रतिषेधः विचार्यप्रतिषेध इत्यर्थः ॥ ल्यब्लोपे पञ्चमी । आक्षेपोऽलङ्कार इत्यर्थः ॥ कश्चित्कञ्चिदर्थं पूर्वं सम्प्रार्थ्य पुनस्स्वयमेव अन्यस्य सत्त्वेन तद्वैयर्थ्यं विचार्य तं निषेधतीति यदयमाक्षेप इति निष्कर्षः ॥ उदाहरति—चन्द्रमिति । हे सखे त्वमात्मानं मां चन्द्रं सन्दर्शय यथाऽहं चन्द्रं पश्येयं तथा कुर्वित्यर्थः ॥ नीवहिदृशां द्विकर्मकत्वादात्मानमिति द्वितीया । वस्तुतस्तु 'चन्द्रसन्दर्शये'ति पाठो युक्तः । तदा हे चन्द्र आत्मानं सन्दर्शयेत्यर्थः ॥ अथ स्वयमेव विचार्य स्वोक्तं प्रतिषेधति—अथवेति । अथवा चन्द्रसन्दर्शनपक्षो माभूदित्यर्थः ॥ कुतः ? प्रियामुखं कान्तावदनमस्ति विद्यते । अतश्चन्द्रकार्यकारिणः तद्वदनस्य सत्त्वेन चन्द्रवैयर्थ्यात्तद्दर्शनं न कार्यमित्यर्थः ॥ अत्र प्रार्थितस्य चन्द्रदर्शनस्य कान्तामुखसत्त्वेन वैयर्थ्यं विचार्य अथवेति तत्प्रतिषेधस्य सूचितत्वादाक्षेपः ॥ ६८

निषेधाभासमाक्षेपं बुधाः केचन मन्वते ।
नाहं दूती तनोस्तापस्तस्याः कालानलोपमः ॥ ६१
आक्षेपोऽन्यो विधौ व्यक्ते निषेधे च तिरोहिते ।
गच्छ गच्छसि चेत्कान्त तत्रैव स्याज्जनिर्मम ॥ ७२

द्वितीयं लक्षयति—निषेधाभासमिति । केचन बुधाः निषेधाभासं आभासरूपं निषेधमाक्षेपं मन्वते अङ्गीकुर्वन्तीत्यर्थः ॥ तेषामयमाशयः । न निषेधमात्रमाक्षेपः चमत्काराभावात् । किं तु यो निषेधोबाधितत्वेन आभासरूपस्सन् अर्थान्तरे पर्यवस्यन् कश्चिद्विशेषमाक्षिपति स आक्षेप इति । उदाहरति—नेति । कयाचिद्विरहतप्तया प्रेषिता काचिच्चातुर्यशालिनी दूती कश्चिन्नायकमुद्दिश्याह—हे नायक अहं दूती नास्मि वक्ष्यमाणवाग्विषये दूती न भवामि अतो मया यद्वक्ष्यते तत्सर्वं सत्यमेव अत इयं दूतीत्वात्तत्कालोचितमृषावादिनीति शङ्का न कार्येति भावः॥ अथ वक्तव्यांशमाह—तनोरिति । तस्यास्त्वत्प्रियायाः तनोश्शरीरस्य तापः विरहसन्तापः कालानलोपमः प्रलयकालवह्नितुल्यः । अत्र दूत्युक्तावेव नाहं दूतीति निषेधः । बाधितत्वादाभासरूपस्सन् अहमनुनयकालोचितकैतववादिनी नभवामि किं तु तथ्यवादिन्येवास्मीत्यर्थे पर्यवस्यन्निदानीमेत्रागत्य त्वया सा जीवनीया अन्यथा मृतिमियादिति विशेषमाक्षिपतीत्याक्षेपः ॥ ६१

तृतीयं लक्षयति—आक्षेप इति । विधौ विधाने व्यक्ते स्फुटे सति निषेधे प्रतिषेधे च तिरोहिते अस्फुटे सति अन्य आक्षेपः । यत्राभिमतनिषेधानुद्धाटनपूर्वकमनभिमतं विधिं प्रकटीकृत्य भङ्ग्यन्तरेणाभिमतप्रतिषेधो गर्भीकृतस्स्यात् तत्राक्षेप उच्यत इत्यर्थः ॥ उदाहरति

३३. विरोधाभासालङ्कारः ॥

आभासत्वे विरोधस्य विरोधाभास उच्यते ।
विनाऽपि तन्वि ! हारेण वक्षोजौ तव हारिणौ ॥ ७१

३४. विभावनालङ्कारः (तद्भेदाः)

विभावना विनाऽपि स्यात्कारणं कार्यजन्म चेत् ।

---

—गच्छेति । काचित्स्वकान्तगमनमनिच्छन्ती त्वया न गन्तव्यमिति कण्ठतोऽनुक्त्वैव स्वोक्तिचातुर्येण तद्गमननिषेधं सूचयति—हे कान्त! त्वं गच्छ । अहं गच्छामि चेत्तव मरणं भवेदतो गृहं गच्छेयमित्याशङ्कायामाह—गच्छसि चेदिति । त्वं गच्छसि चेत्तत्रैव त्वदुद्देश्यदेश एव जनिः जन्म स्यात् भवेत् । प्रार्थनायां लिङ् । तस्मिन् देशे पुनर्जन्म प्रार्थयामीत्यर्थः । मृत्वाप्यन्यस्मिन् जन्मनि तवैव प्रिया स्यां नान्यस्येति भावः । अतो मरणान्न बिभेमीत्यनेन स्वमरणसूचकवचनेन मज्जीवितमिच्छसि चेत्त्वं मागच्छेति निषेधो गर्भीकृतः । अत्र गमननिषेधं प्रच्छाद्य विधेरेव स्फुटीकरणादाक्षेपः ॥ ७०

अथ विरोधाभासं लक्षयति—आभासत्व इति । विरोधस्याभासत्वे भावे सति सः विरोधाभास उच्यते । यत्रापाततः स्फुरतो विरोधस्य पर्यवसाने परिहारः क्रियते तत्र विरोधाभास इति निष्कर्षः । उदाहरति—विनेति । हे तन्वि! सुन्दरि! तव वक्षोजौ कुचौ हारेण मुक्ताहारेण विनाऽपि हारिणौ हारवन्तौ हृद्यौ च भवतः अत्र हाररहितावपि हारसहितावित्यापाततः प्रतीतस्य विरोधस्य हाररहितावपि मनोहराविति श्लेषभंग्याऽर्थान्तरस्वीकारेण परिहृतत्वाद्विरोधाभासः ॥

अथ विभावना । सा च षड्विधा । कारणं विना कार्योत्प-

अप्यलाक्षारसासिक्तं रक्तं त्वच्चरणद्वयम् ॥ ७२
हेतूनामसमग्रत्वे कार्योत्पत्तिश्च सा मता ।
अस्त्रैरतीक्ष्णकठिनैर्जगज्जयति मन्मथः ॥ ७३
कार्योत्पत्तिस्तृतीया स्यात्सत्यपि प्रतिबन्धके ।
नरेन्द्रानेव ते राजन्! दशत्यसिभुजङ्गमः ॥ ७४

त्तिरूपा । हेतुवैकल्येऽपि कार्योत्पत्तिरूपा । प्रतिबन्धकसत्त्वेऽपि कार्योत्पत्तिरूपा । अकारणात् कार्योत्पत्तिरूपा । विरुद्धात्कार्योत्पत्तिरूपा । कार्यात्कारणोत्पत्तिरूपा चेति । तत्राद्यां लक्षयति—विभावनेति । कारणं विना कार्यजन्म कार्योत्पत्तिर्वर्ण्यते चेद्विभावना स्यात् । उदाहरति—अपीति । हे कान्ते! त्वच्चरणद्वयं अलाक्षारसासिक्तं लाक्षारसलेपनरहितमपि रक्तं लोहितं जातं । अत्र लाक्षारसालेपनकारणं विना कान्तापादयुगळे रक्तिमरूपकार्योत्पत्तिवर्णनाद्विभावना । लौहित्यं नैसर्गिकमिति विरोधपरिहारः ॥ ७२

द्वितीयां लक्षयति—हेतूनामिति । हेतूनां कारणानामसमग्रत्वेऽपि अपूर्णत्वेऽपि विकलत्वेपीति यावत् । कार्योत्पत्तिश्च कार्योत्पत्तिरपि सा विभावना मता कविसम्मता । उदाहरति—अस्त्रैरिति । मन्मथः अतीक्ष्णकठिनैरतीक्ष्णैरकठिनैश्च अस्त्रैररविन्दादिभिः पञ्चभिः बाणैः जगल्लोकं जयति वशीकरोतीत्यर्थः । लोके तीक्ष्णकठिनान्येव जये सम्पूर्णसाधनानि—अत्र त्वनङ्गस्यास्त्राणि अनिशितमृदुत्वाद्विकलानि तथाऽपि जगज्जयरूपकार्यवर्णनाद्विभावना ॥ ७३

अथ तृतीयां लक्षयति—कार्योत्पत्तिरिति । प्रतिबन्धके सत्यपि कार्योत्पत्तिस्स्याच्चेत्सा तृतीया विभावनेत्यर्थः । उदाहरति—नरेन्द्रा-

अकारणात्कार्यजन्म चतुर्थी स्याद्विभावना ।
शङ्खाद्वीणानिनादोऽयमुदेति महदद्भुतम् ॥ ७५
विरुद्धात्कार्यनिष्पत्तिर्दृष्टा काचिद्विभावना ।
शीतांशुकिरणास्तन्वीं हन्त सन्तापयन्ति ताम् ॥ ७६

---

निति । हे राजन्! रामचन्द्र ते तव असिः खड्ग एव भुजङ्गमः सर्पः नरेन्द्रान् राज्ञः विषवैद्यांश्च । (नरेन्द्रो विषवैद्येपीति रत्नमालायां) दशति तद्दंशनं करोति । अत्र श्लेषेण मणिमन्त्रौषधशालिनामपि विषवैद्यानां सर्पदष्टता वर्ण्यते । लोके मणिमन्त्रादिभिस्सर्पदंशनं प्रतिबध्यते । इहतु तेषु प्रतिबन्धकेषु सत्स्वपि सर्पदंशनरूपकार्योत्पत्तिवर्णनाद्विभावना ॥ ७४

अथ चतुर्थीं लक्षयति—अकारणादिति । अकारणात्कारणभिन्नादपि कार्यजन्म कार्योत्पत्तिश्चेत्सा चतुर्थी विभावनेत्यर्थः ॥ उदाहरति—शङ्खादिति । अत्र कामिनीकण्ठः शङ्खत्वेन तदीयगानं च वीणानिनादत्वेनाध्यवसीयते । हे सखि शङ्खात्कम्बोः अयं वीणानिनादः वीणाध्वनिः उदेति श्रूयत इत्यर्थः ॥ महदद्भुतमत्याश्चर्यं । शङ्खाद्वीणानिनादस्य अश्रुतचरत्वादिति भावः ॥ अत्र वीणानिनादे वीणैव कारणं शङ्खस्त्वकारणं - तादृशादपि वीणानिनादरूपकार्योत्पत्तिवर्णनाद्विभावना ॥ ७५

अथ पञ्चमीं लक्षयति—विरुद्धादिति । विरुद्धाद्विरुद्धकारणात् कार्यनिष्पत्तिः कार्योत्पत्तिरपि काचिद्विभावना दृष्टा प्रसिद्धेत्यर्थः ॥ उदाहरति—शीतांश्विति । शीतांशुकिरणाश्चन्द्रकराः तां तन्वीं सुन्दरीं

कार्यात्कारणजन्मापि दृष्टा काचिद्विभावना ।
यशः पयोराशिरभूत्करकल्पतरोस्तव ॥ ७७

॥ ३५. विशेषोक्त्यलङ्कारः ॥

कार्याऽजनिर्विशेषोक्तिस्सति पुष्कलकारणे ।
हृदि स्नेहक्षयो नाभूत्स्मरदीपे ज्वलत्यपि ॥ ७८

---

सन्तापयन्ति परितप्तां कुर्वन्ति । हन्तेति विषादे । अत्र तापनिवर्तकत्वेन तापविरुद्धैश्शीतांशुकिरणैः तापोत्पत्तिकथनाद्विभावना ॥ ७६

अथ षष्ठीं लक्षयति—कार्यादिति । कार्यात्कारणजन्मापि कारणोत्पत्तिरपि काचिद्विभावना दृष्टा-लोके कारणात्कार्यजन्मेति मर्यादा तामुल्लङ्घ्य कार्यादेव कारणोत्पत्तिर्वर्णिता चेद्विभावना काचिद्दृष्टेत्यर्थः ॥ उदाहरति—हे राजन् ! तव करएव कल्पतरुः तस्मात् यश एव पयोराशिः अम्बुधिरभूत् - समुद्रात्कल्पतरूत्पत्तेश्शास्त्रप्रसिद्धत्वात्समुद्रः कारणं कल्पवृक्षः कार्यं - अत्र तु कार्यभूतकल्पतरोरेव कारणभूतसमुद्रोत्पत्तिवर्णनाद्विभावना ॥ ७७

अथ विशेषोक्तिं लक्षयति—कार्याजनिरिति । सम्पूर्णकारणे सत्यपि कार्याजनिः कार्यानिष्पत्तिः विशेषोक्तिः । उदाहरति—हृदीति । स्मरएव दीपः तस्मिन् ज्वलत्यपि हृदि कान्ताहृदये स्नेहस्य प्रेम्णः तैलस्य च क्षयो नाभूत् । लोके दीपज्वलने सति स्नेहक्षयो भवति - अत्र तु स्मरदीपज्वलने सत्यपि तैलं न क्षीणमिति तैलनाशकारणे दीपज्वलने सत्यपि तदनिष्पत्तिवर्णनाद्विशेषोक्तिः ॥ ७८

३६. असम्भवालङ्कारः ॥

असम्भवोऽर्थनिष्पत्तेरसम्भाव्यत्ववर्णनम् ।
को वेद गोपशिशुकश्शैलमुत्पाटयेदिति ॥ ७९

३७. असङ्गत्यलङ्कारः तद्भेदाः ॥

विरुद्धं भिन्नदेशत्वं कार्यहेत्वोरसङ्गतिः ।
विषं जलधरैः पीतं मूर्छिताः पथिकाङ्गनाः ॥ ८०

---

असम्भवं लक्षयति—असम्भव इति । अर्थनिष्पत्तेः कार्यसिद्धेरसम्भाव्यत्ववर्णनं सम्भावनाशक्यत्ववर्णनमसम्भवालङ्कारः । यस्य कस्य चित्कार्यस्य निष्पत्तौ विषये इदं सम्भावयितुमेव न शक्यत इति यत्र वर्ण्यते तत्रासम्भवः । उदाहरति—क इति । गोपशिशुकः गोपबालकः कृष्णः शैलमुत्पाटयेत् उन्मूलयिष्यतीति को वेद को वा जानाति स न कोपि सम्भावयितुं शक्नुयादित्यर्थः । अत्र शिशुकृतस्य गोत्रोद्धारस्य को वेदेत्यसम्भाव्यत्ववर्णनादसम्भवालङ्कारः ॥ ७९

अथासङ्गतिः । सा च त्रिविधा । कार्यहेत्वोर्भिन्नदेशत्वरूपा । एकत्र कर्तव्यस्य अन्यत्र कृतिरूपा । अन्यच्चिकीर्षोस्तद्विरुद्धकृतिरूपा चेति । तत्राद्यां लक्षयति—विरुद्धमिति । ययोः कार्यहेत्वोः भिन्नदेशत्वं भिन्नदेशावस्थानं विरुद्धमनुपपन्नं तयोः तद्वर्ण्यते चेत् सः असङ्गत्यलङ्कारः । उदाहरति—विषमिति । जलधरैर्मेघैः विषं जलं कालकूटश्च पीतं—पथिकाङ्गनाः वियोगिवध्वः मूर्छिताः । जलपूर्णमेघानामुद्दीपकत्वद्दर्शनान्मूर्छाक्रान्ता बभूवुरित्यर्थः । अत्र विषमिति

अन्यत्र करणीयस्य ततोऽन्यत्र कृतिश्च सा ।
अपारिजातां वसुधां चिकीर्षन् द्यां तथाऽकरोः ॥ ८१

अन्यत्कर्तुं प्रवृत्तस्य तद्विरुद्धकृतिश्च सा ।
गोत्रोद्धारप्रवृत्तोऽपि गोत्रोद्भेदं पुराऽकरोः ॥ ८२

---

श्लेषमूलाभेदाध्यवसायेन मेघानां कालकूटपाने सति पथिकस्त्रीणां मूर्छेति प्रतीयते । लोके हि यस्य विषपानं तस्यैव मूर्छेति विषमूर्छयोस्समानदेशत्वमुचितं—भिन्नदेशत्वं तु विरुद्धम्—इह तु मेघानां विषपानं स्त्रीणां मूर्छेति तयोर्विरुद्धभिन्नदेशत्ववर्णनादसङ्गतिः ॥ ८०

द्वितीयां लक्षयति—अन्यत्रेति । अन्यत्र करणीयस्य कर्तुमर्हस्य ततस्तस्मादुचितदेशात् अन्यत्रानुचितस्थले कृतिः करणं चान्याऽसंगतिः । उदाहरति—अपारिजातामिति । पारिजातवृक्षं भूमिं नयन्तं कृष्णमुद्दिश्य शक्रस्येदं सोपालम्भवचनं । हे कृष्ण भवान् वसुधां भूमिं अपारिजातां अपगतशत्रुसमूहां पारिजातरहितां च चिकीर्षन् विधातुमिच्छन् द्यां स्वर्गं तथा अपारिजातां पारिजातरहितां अकरोः कृतवान् । अत्र श्लेषमूलाभेदाध्यवसायेन भुवमपारिजातां कर्तुमिच्छन् स्वर्गमेव तादृशं कृतवानिति अन्यत्र भुवि कर्तव्यस्यापारिजातत्वस्य ततोऽन्यत्र स्वर्गे क्रियावर्णनादसङ्गतिः ॥ ८१

तृतीयां लक्षयति—अन्यदिति । अन्यत्कार्यं कर्तुं प्रवृत्तस्य तद्विरुद्धकृतिः प्रकृतकार्यविरुद्धकार्यकरणं च सा असंगतिः । उदाहरति—गोत्रेति । गोत्रोद्धारप्रवृत्तोऽपि गोत्राया उर्व्याः उद्धाराय उद्धरणाय प्रवृत्तोऽपि त्वं गोत्रोद्भेदं गोत्राणां पर्वतानामुद्भेदं खुरघट्टनै

## ३८. विषमालङ्कारः । (तद्भेदाः)

विषमं वर्ण्यते यत्र घटनाऽननुरूपयोः ।
क्वेयं शिरीषमृद्वङ्गी क्व तादृङ्मदनज्वरः ॥ ८३

विरूपकार्यस्योत्पत्तिरपरं विषमं मतम् ।
कीर्तिं प्रसूते धवळां श्यामा तव कृपाणिका ॥ ८४

---

दळनं भुवो दलनं च पुरा वराहावतारे अकरोः कृतवानसीत्यर्थः । इदमपि तदानीमेव कृष्णमुद्दिश्य शक्रस्य सोपालम्भवचनं । तत्रापि श्लेषमूलाभेदाध्यवसायेनैव भूम्युद्धरणप्रवृत्तोऽपि तद्दळनमेव कृतवानिति अन्यद्भूम्युद्धरणं कर्तुं प्रवृत्तस्य कृष्णस्य तद्विरुद्धकृतिः भूम्युद्धरणरूपकार्यविरुद्धतद्दलनरूपकार्यकरणं वर्णितमिति लक्षणसंगतिः ॥

अथ विषमम् । तत्त्रिविधं । अननुरूपघटनारूपं । विरूपकार्योत्पत्तिरूपं । इष्टार्थोद्यमादनिष्टावाप्तिरूपं चेति । यत्राऽननुरूपयोः विसदृशयोर्घटना सम्बन्धो वर्ण्यते तद्विषममित्यर्थः । उदाहरति—क्वेति । शिरीषमृद्वङ्गी शिरीषकुसुममृदुलगात्री इयं क्व कुत्र । तादृक्तथाविधः मदनज्वरश्च क्व । अतिमृदुलत्वेन अतिदुस्सहत्वेन चानुरूपत्वादनयोर्घटनात्तादृक्सन्तापं कथं सोढुं शक्नुयादिति भावः । आत्माऽननुरूपयोर्घटनादाद्यं विषमम् ॥ ८३

द्वितीयं लक्षयति—विरूपेति । विरूपकार्यस्य कारणविरुद्धकार्यस्य उत्पत्तिर्जननमप्यपरमन्यद्विषमं मतमिष्टं । उदाहरति—कीर्तिमिति । हे राजन्! तव श्यामा नीलवर्णा कृपाणिका खड्गः धवळां शुभ्रां कीर्तिं प्रसूते भवत्खड्गमहिम्ना शुभ्रकीर्तिर्जातेत्यर्थः ।

अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थसमुद्यमात् ।
भक्ष्याशयाहिमञ्जूषां दृष्ट्वाऽऽखुस्तेन भक्षितः ॥ ८५

३९. समालङ्कारः (तद्भेदाः) ।

समं स्याद्वर्णनं यत्र द्वयोरप्यनुरूपयोः ।
स्वानुरूपं कृतं सद्म हारेण कुचमण्डलम् ॥ ८६

---

कारणं यद्गुणकं कार्यं तद्गुणकमेवेति लोकस्थितिः । अत्र श्यामखड्ग-रूपकारणेन तद्विरुद्धशुभ्रकीर्तिजननवर्णनाद्द्वितीयं विषमम् । ८४

तृतीयं लक्षयति—अनिष्टस्येति । इष्टार्थसमुद्यमात् अभिलषितार्थोद्योगादनिष्टस्याऽनर्थस्य अवाप्तिश्च प्राप्तिरपि तत् विषममित्यर्थः । यत्रेष्टलाभाशया प्रवृत्तौ सत्यां न केवलमिष्टानवाप्तिः प्रत्युताऽनर्थावाप्तिरपि भवति तदप्यपरं विषममिति निष्कर्षः । उदाहरति—भक्ष्याशयेति । आखुर्मूषकः भक्ष्याशया भक्षणार्हद्रव्यलाभतृष्णया अहिमञ्जूषां सर्पपेटिकां दृष्ट्वा दन्तैश्छित्त्वा तेन सर्पेण भक्षितः भक्ष्यभ्रमेण सर्पपेटिकां दृष्ट्वा तद्विवरेण मुखं प्रसार्य तत्रस्थसर्पेण स्वयमेव दष्टस्सन् मृतोऽभूदित्यर्थः । अत्र भक्ष्यार्थं प्रवृत्तौ न केवलं भक्ष्यानवाप्तिः । प्रत्युत स्वमरणरूपानर्थावाप्तिरपि जातेति तृतीयं विषमम् ।

अथ समम् । तच्च त्रिविधं । अनुरूपवर्णनरूपं । कारणसारूप्यवर्णनरूपं । अक्लेशेन कार्यसिद्धिवर्णनरूपं चेति । तत्राद्यं लक्षयति—सममिति । यत्रानुरूपयोर्वर्णनं क्रियते तत्र समालङ्कारः । यत्र अनुरूपयोर्द्वयोः घटनं वर्ण्यते तत्र सममिति निष्कर्षः । उदाहरति—स्वानुरूपमिति । हारेण मुक्ताहारेण कुचमण्डलं स्वानुरूपं स्वसदृशं सद्म स्था-

सारूप्यमपि कार्यस्य कारणेन समं विदुः ।
नीचप्रवणता लक्ष्मि! जलजायास्तवोचिता ॥ ८७

विनाऽनिष्टं च तत्सिद्धिर्यदर्थं कर्तुरुद्यमः ।
युक्तो वारणलाभोऽयं स्याल! ते वारणार्थिनः ॥ ८८

कृतं अस्याङ्गस्य तदाश्रयणयोग्यत्वादिति भावः । अत्र मुक्ताहारस्य कुचमण्डलमनुरूपं स्थानमित्यनुरूपयोर्घटनं वर्णितमतस्समम् ॥ ८६

द्वितीयं लक्षयति—सारूप्यमिति । कार्यस्य कारणेन सारूप्यं आनुरूप्यवर्णनमपि समं विदुः । उदाहरति.—नीचेति.—प्रायशः नीचानुवर्तनशीलां लक्ष्मीमुद्दिश्य इदं सोत्प्रासवचनं । हे लक्ष्मि! जलजायास्समुद्रोत्पन्नायास्तव नीचप्रवणता निकृष्टानुसरणशीलत्वं निम्नदेशाभिमुख्यं च उचिता अर्हा जले नीचप्रावण्यस्य स्वाभाविकत्वात्तदुत्पन्नायास्तवापि नीचप्रवणता कथं न स्यात् अतः कारणगुणक्रमागतनीचप्रावण्यविषये त्वं नोपालभ्येति भावः । अत्र जलस्य नीचप्रावण्यं निम्नदेशाभिमुख्यं लक्ष्म्यास्तु निकृष्टानुवर्तित्वं तयोश्श्लेषमूलाभेदाध्यवसायेन लक्ष्म्याः जनकसारूप्यवर्णनात् द्वितीयं समम् ॥ ८७

तृतीयं लक्षयति.—विनेति । यदर्थं यत्कार्यसिद्ध्यर्थं कर्तुरुद्यमः प्रयत्नः अनिष्टं विना तस्य सिद्धिर्यदि तदपि सममित्यर्थः । यत्कार्यसिद्ध्यर्थं कर्ता प्रवर्तते तत्कार्यमनिष्टं विना सिध्यति चेत्तदपि सममिति निष्कर्षः । उदाहरति.—युक्तइति । मह्यं वारणं देहीति चिरात्प्रभृति राजानुवर्तनशीलं द्वारि द्वारस्थैः कृतनिवारणं स्यालकं

' ४०. चित्रालङ्कारः ॥

चित्रं तत्र प्रयत्नश्चेद्विपरीतफलेप्सया ।
नमन्ति संतस्त्रैलोक्यादपि लब्धुं समुन्नतिम् ॥ ८९

' ४१. अधिकालङ्कारः ॥

अधिकं पृथुलाधाराद्‌ाधेयाधिक्यवर्णनम् ।

---

दृष्ट्वा राज्ञस्सोपहासवचनमिदं । हे स्याल वारणार्थिनः गजार्थिनः निवारणार्थिनश्च ते तव अयं वारणलाभः युक्तः चिरेण भवत्प्रार्थितस्य वारणस्य अनायासेनैव लाभादस्मिन्विषये लज्जां जहीहीत्यर्थः । अत्र वारणस्य श्लेषमूलाभेदाध्यवसायेनेप्सितवारणरूपत्वादनिष्टं विना
तल्लाभाच्च समम् ॥ ८८

चित्रं लक्षयति.—चित्रमिति । विपरीतफलेप्सया विपरीतफलं प्राप्तुमिच्छया प्रयत्नश्चेत्प्रवृत्तिर्यदि चित्रमित्यर्थः । यद्वा । 'विचित्रं तत्प्रयत्नश्चे' दिति पाठः । तत्प्रयत्नः तद्विपरीतफलं प्राप्तुमिति यत्र वर्ण्यते तत्र विचित्रमिति निष्कर्षः । उदाहरति.—नमन्तीति । सन्तस्सत्पुरुषाः त्रैलोक्यात् लोकत्रयादपि समुन्नतिमौन्नत्यं लब्धुं प्राप्तुं नमन्ति नम्रीभवन्ति च अत्र नमनं प्रयत्नविशेषः तस्य तु फलमधोदेशसंयोगः त्रैलोक्याधिकौन्नत्यं तु तद्विपरीतफलं तत्प्राप्तुमिच्छया नमनमिति वर्णितत्वाद्भवति चित्रम् । औद्धत्यं विहाय श्रीरामचन्द्रप्रणामेऽप्युन्नतपदप्राप्तिर्भवेदन्यथाऽधोगतिरिति विवेकेन
सत्पुरुषास्तं प्रणमन्तीति तात्पर्यम् ॥ ८९

अथाधिकम् । तच्च द्विविधं आधाराधेयाधिक्यवर्णनरूपं

ब्रह्माण्डानि जले यत्र तत्र मान्ति न ते गुणाः ॥ ९०

पृथ्व्याधेयाद्यदाधाराधिक्यं तदपि तन्मतम् ।
कियद्वाग्ब्रह्म यत्रैते विश्राम्यन्ति गुणास्तव ॥ ९१

४२. अल्पालङ्कारः ॥

अल्पं तु सूक्ष्मादाधेयाद्यदाधारस्य सूक्ष्मता ।

---

आधेयादाधाराधिक्यवर्णनरूपं चेति । तत्राद्यं लक्षयति—अधिकमिति । पृथुलाधारादतिविस्तृतत्वेन प्रसिद्धाधारादाधेयस्य तदाश्रितस्याधिक्यवर्णनमिति यत्तदधिकमित्यर्थः ॥ उदाहरति—ब्रह्माण्डानीति । हे राम ! यत्र जले ब्रह्माण्डानि बुद्बुदप्रायाणि तिष्ठन्ति तत्र महाजले तव गुणा अनन्तकल्याणगुणाः न मान्ति न निलीयन्ते तत्परिच्छिन्ना न भवन्तीत्यर्थः ॥ तादृशजलस्यापर्याप्तत्वात्कतिपये एव गुणास्तत्र न मान्ति किं पुनस्सर्वे गुणा इत्यर्थः ॥ अत्र पृथुलत्वेन प्रसिद्धजलरूपाधारादाधेयानां गुणानामाधिक्यवर्णनात्प्रथमाधिकभेदः ॥ ९०

द्वितीयं लक्षयति—पृथ्व्याधेयादिति । अतिपृथुत्वेन प्रसिद्धादाधेयादाधारस्य तदाश्रयस्याधिक्यवर्णनमिति यत्तदपि तत् अधिकं मतम् । उदाहरति—कियदिति । हे सीताधीश ! वाग्ब्रह्म कियत् ? किं परिमाणं स्यात् ? तत्परिमाणमेतावदिति निर्णेतुमशक्यमेवेत्यर्थः ॥ कुतः ? यत्र शब्दब्रह्मणि एते अपरिच्छिन्नत्वेन पूर्वोक्तास्तवानन्तकल्याणगुणा विश्राम्यन्ति असम्बाधं तिष्ठन्तीत्यर्थः ॥ भवदीयभक्तवर्यवाग्गोचरा भवन्ति । यद्वा वेदपुराणेतिहासादिशब्दगोचरा भवन्ति । अत्र विश्राम्यन्तीत्यनेन तादृग्गुणापेक्षया तदाधारस्य वाग्ब्रह्मणः आधिक्यवर्णनादधिकभेदः ॥ ९१

अल्पं लक्षयति—अल्पमिति । सूक्ष्मादल्पत्वेन प्रसिद्धा-

मणिमालोर्मिका तेऽद्य करे जपवटायते ॥ १२

४३. अन्योन्यालङ्कारः ॥

अन्योन्यं नाम यत्र स्यादुपकारः परस्परम् ।
त्रियामा शशिना भाति शशी भाति त्रियामया ॥ १३

४४. विशेषालङ्कारः (तद्भेदाः)

विशेषः ख्यातमाधारं विनाप्याधेयवर्णनम् ।
गतेऽपि सूर्ये दीपस्थास्तमश्छिन्दन्ति तत्कराः ॥ १४

---

दाधेयादाधारस्य सूक्ष्मता वर्ण्यत इति यत्तदल्पं । उदाहरति—मणीति । विरहिणीं प्रति सखीवचनमिदं । हे सखि ! ते मणिमालोर्मिका मणिमयाङ्गुळीयकं अद्यास्मिन्विरहकाले करे भवत्पाणौ जपवटायते जपमालेवाचरति । पूर्वं रत्नमालोर्मिका अङ्गुळिपरिच्छिन्नत्वात्सूक्ष्मा इदानीं करेण परिच्छिन्ना तत्रापि जपमालेव लम्बत इत्याधारस्य सूक्ष्मत्वं विज्ञेयम् ॥ १२

अन्योन्यं लक्षयति—अन्योन्यमिति । यत्रपरस्परमुपकारो वर्ण्यते तत्रान्योन्यं नामालङ्कारः । उदाहरति—त्रियामेति—शशिना चन्द्रेण त्रियामा रात्रिः भाति त्रियामया शशी भाति । अत्र शशिना रात्रिरुपकृता तया शशी । एवं परस्परमुपकारवर्णनादन्योन्यालङ्कारः ॥ १३

अथ विशेषं लक्षयति—विशेष इति । ख्यातं प्रसिद्धमाधारं विनाप्याधेयवर्णनं तदाधेयस्य यत्र कुत्रचित् स्थितिवर्णनमिति यत् स विशेष उच्यत इत्यर्थः ॥ उदाहरति—गत इति । सूर्ये गते अस्तं-

विशेषस्सोपि यद्येकं वस्त्वनेकत्र वर्ण्यते ।
अन्तर्बहिः पुरः पश्चात्सर्वदिक्ष्वपि सैव मे ॥ ९५
किञ्चिदारम्भतोऽशक्यवस्त्वन्तरकृतिश्च सः ।
त्वां पश्यता मया लब्धं कल्पवृक्षनिरीक्षणम् ॥ ९६

---

गते सत्यपि दीपस्थाः दीपाश्रितास्सन्तः तत्करास्सूर्यकिरणास्तमस्तिमिरं छिन्दन्ति नाशयन्ति । अत्र प्रसिद्धस्य सूर्यरूपाधारस्याभावेऽपि तत्किरणानां दीपाश्रितत्वोक्त्या विशेषप्रभेदः ॥ ९४

"सौरं तेजः सायमग्निं संक्रमते ।"

"अग्निं वा आदित्यः सायं प्रविशति"

विशेषान्तरं लक्षयति—विशेष इति । एकमेव वस्तु अनेकत्र वर्ण्यते सोपि तद्वर्णनमपि विशेषप्रभेद एवेत्यर्थः । उदाहरति—अन्तरिति । कस्यचिद्विरहिणो वचनमिदं । मे मम अन्तरभ्यन्तरे बहिर्बाह्यदेशे पुरः पुरोभागे पश्चात्पृष्ठदेशे तथा सर्वदिक्ष्वपि समस्ताशास्वपि सैव प्रियैव । दृश्यत इति शेषः । नान्यदित्यर्थः । अत्रैकस्या एव कान्तायाः अनेकदेशेषु स्थितिवर्णनाद्विशेषभेदः ॥ ९५

विशेषान्तरं लक्षयति—किञ्चिदिति । किञ्चिदारम्भतः यत्किञ्चित्क्रियारम्भात् अशक्यवस्त्वन्तरकृतिरसाध्यकार्यान्तरकरणं च सः विशेषः । यत्र यत्किञ्चित्कार्यसिद्ध्यर्थं प्रवृत्तस्य दैवादसाध्यवस्त्वन्तरकरणं वर्ण्यते तत्रापि विशेष एवेति निष्कर्षः । उदाहरति—त्वामिति । हे राजन् ! त्वां पश्यता मया कल्पवृक्षनिरीक्षणमपि लब्धं प्राप्तं । त्वद्दर्शनार्थं मयि प्रवृत्ते सति अतिवितरणशालितया

४५. व्याघातालङ्कारः (तद्भेदाः) ॥

स्याद्व्याघातोऽन्यथाकारि तथाकारि क्रियेत चेत् ।
यैर्जगत्प्रीयते हन्ति तैरैव कुसुमायुधः ॥ १७

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः ॥ १८

---

त्वद्दर्शनेनैव अर्थाद्दुर्लभकल्पवृक्षदर्शनमपि निष्पन्नमित्यर्थः । अत्र राजदर्शनोद्देशेन प्रवृत्तस्य दैवादसाध्यकल्पतरुदर्शनप्राप्तिवर्णनाद्विशेषभेदः अतस्सोयं त्रिविध इति विज्ञेयम् ॥ १६

अथ व्याघातः । स द्विविधः । तथाकारिण्यतथाकारितक्रिया सौकर्यनिबद्धकार्यविरोधिक्रिया चेति—तत्राद्यं लक्षयति—स्यादिति । तथाकारि तथाभूतकार्यसाधनं अन्यथाकारि अत भूतकार्यसाधनं क्रियेत चेद्व्याघातस्स्यात् । यद्वा यद्यत्साधनतया केनचिदुपात्तं तदेवान्येन तत्प्रतिभटेन तद्विरुद्धसाधनं क्रियेत चेत् सोऽपि व्याघात इति निष्कर्षः । आद्यमुदाहरति—यैरिति । यैः कुसुमैः करणैः जगल्लोकः प्रीयते तृप्यते तैरेव जगदानन्दकैरेव कुसुमैः कुसुमायुधः जगत् हन्ति बाधते । अत्र जगत्प्रीतिसाधनान्येव कुसुमानि मन्मथेन तद्विरुद्धजगत्पीडासाधनानि कृतानीति प्रथमव्याघातभेदः ॥ १७

आद्यस्योदाहरणान्तरमपि दर्शयति—दृशेति । विरूपाक्षस्य शिवस्य दृशा नेत्रेण दग्धं मनसिजं मदनं या वामलोचनाः दृशा जीवयन्ति ता विरूपाक्षस्य जयिनीः वामलोचनाः मनोहरनयनाः स्त्रियः स्तुवे । पुरा विरूपाक्षः दृशैव साधनेन मदनं दग्धवान् ।

सौकर्येण निबद्धापि क्रिया कार्यविरोधिनी ।
दयाचेद्बाल इति मय्यपरित्याज्य एव ते ॥ ९५

४६. कारणमालालङ्कारः ॥

गुम्भः कारणमाला स्याद्यथाप्राक्प्रान्तकारणैः ।

---

इदानीं विरूपाक्षविजयिनीभिः दृशैव मदनो जीवितः । अतो विरूपाक्षप्रतिभटत्वात्ताः स्तौमीति तात्पर्यं ; शिवेन मदनहननसाधनत्वेन कृता दृक् तद्विरोधिनीभिस्त्रीभिस्तद्विरुद्धमदनजीवनसाधनीकृतेति व्याघातः ॥ ९८

सौकर्यनिबद्धकार्यविरोधिक्रियारूपं लक्षयति—सौकर्येणेति—कार्यस्य नियुक्तकार्यस्य विरोधिनी क्रिया कर्म निबद्धा चेत्सोऽपि व्याघातः । अयमर्थः । येन साधनेन यत्कार्यक्रिया केनचिद्दृढीकृता तेनैव साधनेन तत्कार्यविरोधिक्रिया तदन्येन सुकरं समर्थिता चेत्सोऽपि व्याघात एवेति । कार्यविरोधिक्रियायां सौकर्यं तु कारणस्य सुतरां तदानुगुण्यं । उदाहरति—दयेति '। केनचिज्जैत्रयात्रोन्मुखेन राज्ञा बालत्वाद्युवराजं राज्य एव संस्थाप्य गन्तुं प्रयत्ने कृते सति बालत्वादहं न परित्याज्यः किं तु सहैव नेतव्य इति तद्वियोगाऽसहिष्णोर्युवराजस्य वचनमिदं । हे राजन्! बाल इति ते तव मयि दया चेत्तर्हि अहं ते अपरित्याज्यः किं तु सहैव नेतव्यः एतावत्पर्यन्तमवियुक्तस्य परित्याग एव न युक्तः । अतो मत्स्थापनं त्वन्मनसि कथं रोचत इति वाक्यतात्पर्यम् । अत्र बालत्वहेतुना युवराजस्य राज्यस्थापने राज्ञा निर्णीते सति तेनैव हेतुना युवराजेन तद्विपरीतसहानयनमेव समर्थितमिति व्याघातभेदः ॥ ९९

अथ कारणमालां लक्षयति—गुम्भ इति । प्राक्प्रान्तौ पूर्वो-

नयेन श्रीश्श्रिया त्यागस्त्यागेन विपुलं यशः ॥ १००
भवन्ति नरकाः पापात्पापं दारिद्र्यसम्भवम् ।
दारिद्र्यमप्रदानेन तस्माद्दानपरो भव ॥ १०१

४७. एकावळ्यलङ्कारः ॥

गृहीतमुक्तरीत्यार्थश्रेणिरेकावळी मता ।

---

त्तरदेशौ अनतिक्रम्य यथाप्राक्प्रान्तं यानि कारणानि तैर्गुम्भः ग्रथनं कारणमालेत्युच्यते । उत्तरोत्तरकारणभूतैः पूर्वपूर्ववस्तुभिः पूर्वपूर्वकारणभूतैरुत्तरोत्तरवस्तुभिर्व्याकृतो यस्सन्दर्भस्सा कारणमालेत्युच्यत इति निष्कर्षः । तथा च । उत्तरोत्तरकारणभूतपूर्वपूर्वसन्दर्भः । पूर्वपूर्वकारणभूतोत्तरोत्तरसन्दर्भश्चेति द्विधा पर्यवसिता । तत्राद्यामुदाहरति नयेनेति । नयेन नीत्या श्रीः लक्ष्मीः भवतीति शेषः । श्रियात्यागः वितरणं । विद्यत इति शेषः । त्यागेन विपुलं विस्तृतं यशः । विद्यत इति शेषः । अत्र नयस्य स्वोत्तरश्रीहेतुत्वाच्छ्रियस्स्वोत्तरवितरणहेतुत्वाद्वितरणस्य स्वोत्तरयशोहेतुत्वादुत्तरकारणभूतपूर्वपूर्वगुम्भरूपः कारणमालाभेदः ॥ १००

द्वितीयमुदाहरति—भवन्तीति । नरकाः रौरवादयः पापाद्दुष्टकर्मणः भवन्ति । जननामिति शेषः । पापं दारिद्र्यसम्भवं दारिद्र्योत्पन्नं भवति दारिद्र्यं अप्रदानेन दातृत्वाभावेन भवति । तस्मात् कारणात् हे सखे! दानपरः दातृत्वासक्तो भव । यथाशक्ति सत्पात्रसमुदाये दानं कुर्वित्यर्थः । अत्र नरकान् प्रति पापं हेतुः । पापं प्रति दारिद्र्यं हेतुः । दारिद्र्यं प्रति दानाभावो हेतुः । अत्रोत्तरोत्तरकारणगुम्भनरूपः कारणमालाभेदः ॥ १०१

एकावळीं लक्षयति.—गृहीतेति । उत्तरोत्तरस्य पूर्वपूर्वविशेष-

नेत्रे कर्णान्तविश्रान्ते कर्णौ दोस्तम्भदोलिनौ ॥ १०२
दोस्तम्भौ जानुपर्यन्तप्रलम्बनमनोहरौ ।
जानुनी रत्नमुकुराकारे तस्य महीभुजः ॥ १०३

४८. मालादीपकालङ्कारः ॥

दीपकैकावळीयोगान्मालादीपकमुच्यते ।
स्मरेण हृदये तस्यास्तेन त्वयि कृता स्थितिः ॥ १०४

---

णत्वं पूर्वपूर्वस्य वा उत्तरोत्तरविशेषणत्वं गृहीतमुक्तरीतिः तया अर्थश्रेणिः पदार्थपङ्क्तिः एकावळी मता । ततः उत्तरोत्तरस्य पूर्वपूर्वविशेषणत्वं यत्र वर्ण्यते तत्रैका । पूर्वपूर्वस्य उत्तरोत्तरविशेषणत्वं यत्र वर्ण्यते तत्रान्येति द्विधा भवति तत्राद्यामेव सार्धश्लोकेनोदाहरति.—नेत्रे इति । तस्य महीभुजः श्रीरामचन्द्रस्य नेत्रे कर्णान्तयोः विश्रान्ते तत्पर्यन्तं आयते इत्यर्थः । कर्णौ दोस्तम्भदोलिनौ भुजपर्यन्तलम्बमानावित्यर्थः ॥ १०२

दोस्तम्भाविति । दोस्तम्भौ जानुपर्यन्तप्रलम्बनेन तत्पर्यन्तमायतत्वेन मनोहरौ जानुनी रत्नमुकुराकारे मणिदर्पणसदृशे । विद्येते इति शेषः । अत्र पूर्वे नेत्रे प्रत्युत्तरयोः कर्णयोर्विशेषणत्वं । कर्णौ प्रति दोस्तम्भयोर्विशेषणत्वं । दोस्तम्भौ प्रति जानुनोर्विशेषणत्वं । जानुनी प्रति रत्नमुकुरयोर्विशेषणत्वमित्येवमुत्तरोत्तरस्य पूर्वपूर्वं प्रति विशेषणत्वादाद्यैकावळी । एवमन्याप्यूह्या ॥ १०३

अथ मालादीपकं लक्षयति.—दीपकेति । दीपकैकावल्योर्योगान्मालादीपकमुच्यते । पण्डितैरङ्गीक्रियते इत्यर्थः । यत्र दीपकैकाव-

Tongue crushes the bones though it has no bones.



४९. सारालङ्कारः ॥

उत्तरोत्तरमुत्कर्षस्सार इत्यभिधीयते ।
मधुरं मधु पीयूषं तस्मात्तस्मात्कवेर्वचः ॥ १०५

५०. यथासंख्यालङ्कारः ॥

यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयः ।

---

द्वयोरलङ्कारयोः लक्षणे संभवतः तत्र मालादीपकं नामालङ्कार इति निष्कर्षः उदाहरति.—स्मरेणेति । काचित्प्रियया प्रेषिता तत्प्रियं प्रत्याह तस्याः भवत्प्रियायाः हृदये स्मरेण स्थितिः कृता त्वद्विरहात्तस्याः महती मन्मथपीडा जातेत्यर्थः । तेन प्रियाहृदयेन त्वयि स्थितिः कृता मन्मथपरवशा सती त्वय्येव मनो निवेशितवतीत्यर्थः । अत्र पूर्वोत्तर-वाक्ययोः स्थितिरेक एव धर्मइति दीपकं । गृहीतमुक्तरीतिसद्भावा-देकावळिश्च तयोर्योगान्मालादीपकम् ॥ १०४

सारं लक्षयति.—उत्तरोत्तरमिति । पूर्वपूर्वापेक्षया उत्तरोत्तरं प्रत्युत्कर्षो वर्ण्यते चेत्तर्हि सार इत्यभिधीयते । सार इत्यलङ्कारः कविभि-रङ्गीक्रियत इत्यर्थः । यत्र पूर्वपूर्वापेक्षया उत्तरोत्तरस्य उत्कर्षः प्रति-पाद्यते तत्र सारालङ्कार इति निष्कर्षः । उदाहरति.—मधुरमिति । मधु क्षौद्रं मधुरं मधुररससंयुक्तं । तस्मान्मधुनः पीयूषममृतं मधुरं तस्मात्पीयूषात्कवेर्वचो मधुरं । अत्र पूर्वपूर्वापेक्षया उत्तरोत्तरस्य उत्कर्षवर्णनात्सारालङ्कारः ॥ १०५

यथासंख्यं लक्षयति.—यथासंख्यमिति । यत्र क्रमिकाणां

शत्रुं मित्त्रं विपत्तिं च जय रञ्जय भञ्जय ॥ १०६

५१. पर्यायालङ्कारः (तद्भेदाः)

पर्यायो यदि पर्यायेणैकस्यानेकसंश्रयः ।
पद्मं मुक्त्वा गता चन्द्रं कामिनीवदनोपमा ॥ १०७

एकस्मिन्यद्यनेकं वा पर्यायस्सोऽपि सम्मतः ।
अधुना पुलिनं तत्र यत्र स्रोतः पुराऽजनि ॥ १०८

---

समानसंख्याकानां क्रमेण प्रथमस्य प्रथमेन द्वितीयस्य द्वितीयेनेत्यादि क्रमेण समन्वयो वर्ण्यते तत्र यथासंख्यालङ्कारः उदाहरति.—शत्रुमिति । हे राजन् ! त्वं शत्रुं जय मित्रं रञ्जय आनन्दय । विपत्तिं भञ्जय निवारय । अत्र क्रमिकाणां यथाक्रमेण वर्णनाद्यथासंख्यम् ॥

अथ पर्यायः । स द्विविधः एकस्य अनेकाश्रयरूपः । अनेकस्यैकाश्रयरूपश्चेति । तत्राद्यं लक्षयति.—पर्याय इति । एकस्यैव वस्तुनः पर्यायेणानेकसंश्रयः अनेकाश्रयवर्णनं यदि तर्हि पर्यायालङ्कारः । उदाहरति.—पद्ममिति । कामिनीवदनोपमा सुन्दरीमुखसादृश्यं पद्मं मुक्त्वा चन्द्रं गता प्राप्ता । अत्त्रैकस्या एव कामिनीवदनोपमायाः क्रमेण पद्मचन्द्ररूपानेकाश्रयवर्णनात्पर्यायः । यद्यप्युपमायाः पद्माश्रयणं कण्ठतो नोक्तं । तथाऽपि पद्मं मुक्त्वा गतेत्युक्त्या प्राक्पद्माश्रयणं लभ्यते वियोगस्य प्राप्तिपूर्वकत्वात् अतोऽह्नि पद्मे स्थित्वा रात्रौ चन्द्रं गतेत्यर्थः ॥ १०७

द्वितीयं लक्षयति.—एकस्मिन्निति-एकस्मिन्नाधारे क्रमेणवा क्रमेणैव अनेकमाधेयं भवति यदि सोऽपि पर्यायस्सम्मतः । यत्र एक-

५२. परिवृत्त्यलङ्कारः (तद्भेदाः)

परिवृत्तिर्विनिमयो न्यूनाभ्यधिकयोर्मिथः ।
जग्राहैकं शरं मुक्त्वा कटाक्षांत्सरिपुश्रियाम् ॥ १०९

५३. परिसंख्यालङ्कारः ॥

परिसंख्या निषिध्यैकमेकस्मिन्वस्तुयन्त्रणम् ।
स्नेहक्षयः प्रदीपेषु न स्वान्तेषु नतभ्रुवाम् ॥ ११०

स्मिन्नाधारे क्रमेणानेकाधेयानि वर्ण्यन्ते तत्र पर्यायभेद इति निष्कर्षः । उदाहरति.—अधुनेति । यत्र नद्यां स्रोतः प्रवाहः पुराजनि तत्र नद्यां अधुना पुलिनं दृष्टं । अत्र एकस्यामेव नद्यां क्रमेण स्रोतः-पुलिनरूपानेकाधेयवर्णनात्पर्यायभेदः ॥ १०८

परिवृत्तिं लक्षयति.—परिवृत्तिरिति । न्यूनाभ्यधिकयोः अल्पाधिकयोः मिथोऽन्योन्यं विनिमयः परिवृत्तिः । यत्र स्वल्पव्ययेन अधिकस्वीकरणं । अधिकव्ययेन स्वल्पस्वीकरणं । समेन समस्वीकरणं वा वर्ण्यते तत्र परिवृत्तिर्नामालंकार इति निष्कर्षः ॥

तत्राद्यामुदाहरति—जग्राहेति । स राजा एकमेव शरं बाणं मुक्त्वा रिपुश्रियां कटाक्षान् जग्राह । एकबाणमोचनपूर्वकमनेकशत्रुलक्ष्मीकटाक्षान् स्वीकृतवानित्यर्थः । राजायं पराक्रमशालित्वादेकेनैव बाणेन रणे शत्रून् हत्वा तद्राज्यलक्ष्मीं प्रापेति श्लोकतात्पर्यं । अत्रैकबाणरूपस्वल्पवस्तुव्ययेनानेकलक्ष्मीकटाक्षरूपवस्तुस्वीकारवर्णनात्प्रथमपरिवृत्तिः । एवं द्वितीये तृतीये ज्ञेये ॥ १०९

अथ परिसंख्यां लक्षयति.—परिसंख्येति । एकं वस्तु निषिध्य एकत्र प्रतिषिध्य एकस्मिन्नन्यास्मिन् यन्त्रणं नियमनं यत्सा परिसंख्ये-

## ५४. विकल्पालङ्कारः ॥

विरोधे तुल्यबलयोर्विकल्पालंकृतिर्मता ।
सद्यश्शिरांसि चापान्वा नमयन्तु महीभुजः ॥ १११

त्यर्थः । यत्रैकमेव वस्तु एकत्र निषिध्य अन्यत्र नियम्यते तत्र परिसंख्यालङ्कार इति निष्कर्षः उदाहरति—स्नेहेति । प्रदीपेषु दीपपात्रेषु स्नेहक्षयस्तैलनाशः अभूत्—नतभ्रुवामङ्गनानां स्वांतेषु हृदयेषु स्नेहक्षयः प्रेमनाशः नाभूत् अभिवृद्धिरेवाभूदित्यर्थः । अत्र श्लेषमूलाभेदाध्यवसायेनैकस्यैव स्नेहस्य दीपेषु निषेधात्तस्यैव स्त्रीचित्तेषु नियमनाच्च भवति परिसंख्या ॥ ११०

अथ विकल्पं लक्षयति—विरोध इति । तुल्यबलयोस्समप्रमाणकयोर्विरोधे सति युगपत्कर्तुमशक्यत्वे सति विकल्पालंकृतिर्मता । यत्र तुल्यप्रमाणकयोः पदार्थयोर्युगपत्प्राप्तौ सत्यां तयोर्विरोधेन युगपत्कर्तुमशक्यत्वात्तयोरन्यतर एवार्थः कर्तव्यतया निश्चीयते तत्र विकल्पालङ्कार इति निष्कर्षः । उदाहरति—सद्य इति । महीभुजो राजानस्सद्यस्तत्क्षणे शिरांसि मस्तकान् चापान् धनूंषि वा नमयन्तु सन्धिरभिमतश्चेन्नम्रशिरस्का भूत्वा तूष्णीं तिष्ठन्तु—युद्धमभिमतं चेदौद्धत्येन चापानारोप्य युद्धसन्नद्धा भवन्त्विति विकल्पितोयं वाक्यार्थः । अत्र सन्धिवशान्मानपरित्यागपूर्वकं शिरोनमनस्य विग्रहवशात्साहंकारं धनुष्कोटौ मौर्व्यारोपणस्य च प्राप्तौ सत्यां तयोर्विरोधेन युगपत्कर्तुमशक्यत्वादन्यतर एव कर्तव्यतया निर्णीयत इति भवति विकल्पः ॥ १११

## ५५. समुच्चयालङ्कारः ॥ (तद्भेदाः) ॥

बहूनां युगपद्भावभाजां गुम्भस्समुच्चयः ।
नश्यन्ति पश्चात्पश्यन्ति भ्रमन्ति च तवाहिताः ॥ ११२
अहं प्रथमिकाभाजामेककार्यान्वयोऽपि सः ।
कुलं रूपं वयो विद्या धनं च मदयन्त्यमुम् ॥ ११३

---

अथसमुच्चयः । स द्विविधः । अविरुद्धानेकसन्दर्भरूपकः । अहंपूर्विकावतामेकान्वयरूपश्चेति । तत्राद्यं लक्षयति—बहूनामिति । युगपद्भावभाजां यौगपद्यार्हाणामविरुद्धानामिति यावत् । तादृशां बहूनामनेकपदार्थानां गुम्भस्सन्दर्भस्समुच्चयस्स्यात् । यत्र विरोधाभावेन युगपत्समाहर्तुं शक्यानां बहूनां पदार्थानामेकदा प्राप्तिर्वर्ण्यते तत्र समुच्चयालङ्कार इति निष्कर्षः । उदाहरति—नश्यन्तीति । हे राजन् ! तव द्विषः नश्यन्ति क्षयिष्णवो भवन्ति । तथा पश्यन्ति पलायनसमये भूयः पर्यावर्त्य पश्यन्तीत्यर्थः । तथा भ्रमन्ति कान्दिशीकास्सन्तस्सर्वत्र भ्रमणं कुर्वन्तीत्यर्थः । भ्रश्यन्तीति पाठे भ्रष्टा भवन्तीत्यर्थः । अत्र शत्रुषु नाशपश्चादवलोकनभ्रमणक्रियाणां विरोधाभावेन युगपद्गुम्भवर्णनाद्भवति समुच्चयः ॥ ११२

द्वितीयं लक्षयति—अहंप्रथमिकेति । अहंप्रथमिकाभाजामहंपूर्विकाभाजां अहमेव कार्यं कर्तुं शक्नोमीत्येवं प्रकारेण अहंकारयुक्तानामित्यर्थः । कारणानामिति शेषः । एककार्यान्वयोऽपि एकस्मिन्कार्ये साधनत्वेन अन्वयोऽपि सः समुच्चयालङ्कारः । यत्रैकस्मिन् कारणे कार्यसिद्धिहेतुत्वेन प्रक्रान्ते सति अन्येपि हेतवो यद्यहमह-

## ५६. कारकदीपकालङ्कारः ॥

**क्रमिकैकगतानां तु गुम्भः कारकदीपकम् ।**
**गच्छत्यागच्छति पुनः पान्थः पश्यति पृच्छति ॥ ११४**

मिकया खलेकपोतन्यायेन कार्यं साधयन्तीति वर्ण्यते तत्र समुच्च-यस्स्यादिति निष्कर्षः । उदाहरति—कुलमिति । कुलं सद्वंशः । रूपं सौन्दर्यं । वयस्तारुण्यं । विद्या वेदशास्त्रादिसम्पत्तिः । धनं प्रभूतर-त्नकनकादिकं च । अमुं पुरुषं मदयन्ति दृप्तं कुर्वन्ति अत्र मदरूपकार्ये आभिजात्यादिषु एकमेव सम्पूर्णं कारणं तादृशानामन्येषामपि कार-णानामहमहमिकया मदरूपकार्यसाधनत्ववर्णनाद्भवति समुच्चयभेदः ॥

अथ कारकदीपकं लक्षयति—क्रमिकेति । क्रमिकाः क्रम-प्राप्ताः एकगताः एककारकान्विताश्च याः क्रियास्तासां गुम्भः ग्रन्थनं कारकदीपकम् । यत्रैककारकमनेकाः क्रियाः क्रमेणानुयन्ति तत्रकारक-दीपकम् । यत्र यौगपद्येन बहूनामेकत्रान्वयः तत्र समुच्चय इति भेदो द्रष्टव्यः । तत्सूचनार्थैवैतल्लक्षणे तुशब्दः । उदाहरति—गच्छतीति पान्थः प्रियां त्यक्त्वा गन्तुमसहमानः कश्चित्पथिकः गच्छति यथा कथञ्चिद्व्रजति पुनरागच्छतीति तद्विरहमसहमानः भूय एवागच्छति ततः पश्यति प्रियामुखमनिमेषदृष्ट्या पश्यति ततः पृच्छति मद्ग मनं ते मनसे रोचते किमिति प्रश्नं करोति अत्र गमनादिक्रियाण क्रमेणैककर्तृकारकान्वयात्कारकदीपकालङ्कारः । एकस्याऽनेकान्वय साधर्म्येण दीपकच्छायानुकारित्वात्तदन्वयस्य कारकप्रतियोगित्वा कारकदीपकव्यपदेशः ॥ ११५

५७. समाध्यलङ्कारः ॥

समाधिः कार्यसौकर्यं कारणान्तरसन्निधेः ।
उत्कण्ठिता च कुलटा जगामास्तं च भानुमान् ॥ ११५

५८. प्रत्यनीकालङ्कारः ॥

प्रत्यनीकं बलवतश्शत्रोः पक्षे पराक्रमः ।
जैत्रनेत्रानुगौ कर्णावुत्पलाभ्यामधः कृतौ ॥ ११६

---

अथ समाधिं लक्षयति—समाधिरिति । कारणान्तरस्य आरम्भककारणापेक्षया अन्यकारणस्य सन्निधानात्कार्यस्यारब्धकार्यस्य सौकर्यं सुलभत्वं समाधिरुच्यते । समुच्चये बहूनां कारणानामहमहमिकया युगपदेककार्यान्वयः । इह तु एकेन प्रकृतकार्यारम्भे सति काकतालीयागतेन कारणान्तरेण कार्यसौकर्यमात्रमिति भेदः । उदाहरति—उत्कण्ठितेति । कुलटा जारस्त्री उत्कण्ठिता स्वतोगन्तुमुत्सुकाभूत् । अस्मिन्नेव समये भानुमांत्सूर्योऽप्यस्तं जगामास्तंगतोऽभूत् । अत्र प्रियाभिसरणे कुलटाया उत्कण्ठैव पर्याप्तं कारणमत्रान्तरे सूर्येऽस्तंगते सति अन्धकारोदयादभिसरणसौकर्यं जातमिति समाधिरलंकारः ॥ ११५

अथ प्रत्यनीकं लक्षयति—प्रत्यनीकमिति । बलवतः प्रबलस्य शत्रोस्सम्बन्धिनि पक्षे मित्रादिसहाये पराक्रमः प्रत्यनीकमित्युच्यते । यत्र कश्चित्साक्षात्स्वशत्रौ पराक्रमितुमशक्तस्सन् तदनुवर्तिनं जनं तिरस्करोतीति वर्ण्यते तत्र प्रत्यनीकालंकार इति निष्कर्षः उदाहरति—जैत्रेति । उत्पलाभ्यां इन्दीवराभ्यां जैत्रनेत्रानुगौ स्वजे-

५९. काव्यार्थापत्त्यलङ्कारः ॥

कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते ।
स जितस्त्वन्मुखेनेन्दुः का वार्ता सरसीरुहाम् ॥ ११७

६०. काव्यलिङ्गालङ्कारः ॥

समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम् ।

---

तृनयनानुवर्तिनौ कर्णौ अधः कृतौ तिरस्कृतौ अधः प्रदेशे कृतौ च ।
अत्र श्लेषमूलाभेदाध्यवसायेन उत्पलाभ्यां साक्षात्स्वजेतृनेत्राभिभवे
सामर्थ्याभावात्कर्णान्तविश्रान्तनेत्रानुसरणशीले श्रोत्रे अधः कृते इति
वर्णनाद्भवति प्रत्यनीकम् ॥ ११६

अथ काव्यार्थापत्तिं लक्षयति—कैमुत्येनेति । कैमुत्येन कैमुतिकन्यायेन अर्थसंसिद्धिः वस्त्वन्तरसंसिद्धिः काव्यार्थापत्तिरिष्यते । यत्र दुस्साध्यार्थवर्णनेन अन्यस्य सुकरवस्तुनस्सिद्धिः दण्डापूपिकान्यायेन वर्णिता तत्र काव्यार्थापत्तिर्नामालङ्कार इत्यर्थः । उदाहरति—स इति । हे सखि ! सः प्रसिद्धः जेतुमशक्य इति भावः । इन्दुस्त्वन्मुखेन जितः अभिघातः सरसीरुहां पद्मानां का वार्ता का कथा ? त्वन्मुखेन पद्मानि जितानीति किमु वक्तव्यमित्यर्थः । अत्र दुर्जयेन्दुजये वर्णिते सति सुजयसरसीरुहां जयस्य कैमुत्यन्यायेनैव लब्धत्वात्काव्यार्थापत्तिः । काव्यपदं 'पीनो देवदत्तः दिवा न भुङ्क्ते' इत्याद्यर्थापत्तिनिवारणाय प्रयुक्तम् ॥ ११७

अथ काव्यलिङ्गं लक्षयति—समर्थनीयस्येति । अतिदुष्कर

जितोऽसि मन्द कन्दर्प मच्चित्तेऽस्ति त्रिलोचनः ॥ ११८

६१. अर्थान्तरन्यासालङ्कारः (तद्भेदाः) ॥

उक्तिरर्थान्तरन्यासस्स्यात्सामान्यविशेषयोः ।
हनूमानब्धिमतरद्दुष्करं किं महात्मनाम् ॥ ११९

त्वात्समर्थनसापेक्षः समर्थनीयः । तस्यार्थस्य समर्थनं हेतुप्रदर्शनेनोपपादनं काव्यलिङ्गं । दुष्करार्थमुपन्यस्य तस्याऽसम्भाव्यत्वेन समर्थनापेक्षायां वाक्यार्थं पदार्थं वा हेतुं प्रदर्श्य सोऽर्थस्समर्थ्यते चेत्तत्काव्यलिङ्गमित्यर्थः । तथा च वाक्यार्थहेतुकं पदार्थहेतुकं चेति काव्यलिङ्गालङ्कारस्य द्वैविध्यमवगन्तव्यं । तत्राद्यमुदाहरति— जितोऽसीति । हे मन्द जड कन्दर्प मन्मथ जितोऽसि मया पराजितोऽसीत्यर्थः । कुतः ? मच्चित्ते त्रिलोचनश्शिवोऽस्ति त्वदीयदेहदाहकलोचनशालिहरसन्निधानान्मम भवज्जयः कियानिति भावः । अत्र दुष्करमदनविजयरूपार्थस्य 'मच्चित्तेऽस्ति त्रिलोचन' इति वाक्यार्थेन समर्थनाद्भवति काव्यलिङ्गभेदः । एवं पदार्थहेतुकमूह्यम् ॥ ११८

अथार्थांतरन्यासं लक्षयति—उक्तिरिति । सामान्यविशेषयोरुक्तिरर्थांतरस्स्यात् । यत्र विशेषे प्रस्तुते सति तेन सह अप्रस्तुतसामान्यस्य अर्थांतरस्य न्यासः न्यसनं तथा सामान्ये प्रस्तुते सति तेन सहाप्रस्तुतविशेषस्य न्यसनं च समर्थनार्थं भवति तत्र द्विविधोऽर्थांतरन्यास इत्यर्थः । तत्राद्यमुदाहरति—हनूमानिति । हनूमान् अब्धिं समुद्रं अतरत् व्यलङ्घयत् एवं प्रस्तुतं विशेषं विन्यस्य तेन सह अप्रस्तुतं सामान्यं न्यस्यति—दुष्करमिति । महात्मनां महानु-

गुणवद्वस्तुसंसर्गाद्याति स्वल्पोऽपि गौरवम् ।
पुष्पमालानुषङ्गेण सूत्रं शिरसि धार्यते ॥ १२०

६२. विकस्वरालङ्कारः ॥

यस्मिन्विशेषसामान्यविशेषास्स विकस्वरः ।
स न जिग्ये महान्तो हि दुर्धर्षास्सागरा इव ॥ १२१

---

भावानां दुष्करं दुःखेन कर्तुं शक्यं किं ? न किमपीत्यर्थः । अतो हनूमतोऽपि लोकातिक्रान्तप्रभावत्वात्समुद्रतरणं तस्य कियदिति सामान्येन समर्थ्यत इति भवति प्रथमोऽर्थान्तरन्यासः ॥ ११९

द्वितीयं श्लोकेनोदाहरति—गुणेति । स्वल्पोऽपि निकृष्टोऽपि गुणवद्वस्तुसंसर्गात् गुणवदर्थसम्पर्कात् गौरवं गुरुत्वं याति प्राप्नोति । तथा हि । पुष्पमालानुषङ्गेण सुरभिमाल्यसम्पर्केण सूत्रं तन्तुः । निर्गुणोऽपीति भावः । शिरसि धार्यते शिरसा वहनेन बहूक्रियत इत्यर्थः । अत्र गुणवदित्यादिना पूर्वार्धेन प्रस्तुतं सामान्यं निर्दिश्य तत्समर्थकत्वेन तेन सह पुष्पमालानुषङ्गेणेत्यप्रस्तुतविशेषस्य न्यसनं कृतमिति द्वितीयोऽर्थांतरन्यासः ॥ १२०

अथ विकस्वरं लक्षयति—यस्मिन्निति । यस्मिन् यत्र विशेष-सामान्यविशेषास्सामर्थ्यसमर्थकभावेन उपमानरीत्या वा वर्ण्यंते तत्र द्विविधो विकस्वराख्योऽलङ्कारः । तत्रोपमानरीत्या विकस्वरमुदाहरति—स इति । स प्रसिद्धो राजा न जिग्ये केनापि जितो नाभूत् कुतः ? हि यस्मान्महान्तः अत्युत्कृष्टाः दुर्धर्षाः दुर्जया इत्यर्थः । कुत इत्याशंक्य उपमानप्रदर्शनमुखेन समर्थयति—सागरा इवेति । अत्र

६६, प्रौढोक्त्यलङ्कारः ॥

प्रौढोक्तिरुत्कर्षाहेतौ तद्धेतुत्वप्रकल्पनम् ।
कचाः कलिन्दजातीरतमालस्तोममेचकाः ॥ १२२

६४. संभावनालङ्कारः ॥

संभावनं यदीत्थं स्यादित्यूहोन्यस्य सिद्धये ।
यदि शेषो भवेद्वक्ता कथितास्स्युर्गुणास्तव ॥ १२३

महतां दुर्धर्षत्वं सामान्यं निर्दिश्य तस्यापि सागरौपम्येन समर्थनाद्विकस्वरभेदः । एवं सर्वत्राप्यूह्यम् ॥ १२१

अथ प्रौढोक्तिं लक्षयति.—प्रौढोक्तिरिति । उत्कर्षाहेतौ कार्यातिशयाहेतौ तद्धेतुत्वप्रकल्पनं कार्यातिशयकारणत्ववर्णनं । यत्र कार्यातिशयाहेतुना तदुत्पादनं वर्ण्यते तत्र प्रौढोक्तिरिति निष्कर्षः । उदाहरति—कचा इति । कचाः कांताचिकुराः कलिन्दजातीरे यमुनारोधसि ये तमालस्तोमाः तापिञ्छवृक्षसङ्घाः तद्वन्मेचकाः श्यामला भवन्तीत्यर्थः । अत्र केवलतमालानां नैल्यसत्त्वेऽपि अतिशयितत्वसिद्ध्यर्थं कलिन्दजातीरस्थत्वविशेषणमुपात्तं अन्यथा तद्विशेषणमनर्थकं स्यात् । नैल्यातिशये तु तत्तीरस्थत्वं न हेतुः तथापि तद्धेतुत्वकल्पनात्प्रौढोक्तिः ॥ १२२

संभावनं लक्षयति.—संभावनमिति । अन्यस्य विवक्षितार्थस्य सिद्धये निष्पत्तये इत्थं स्यादेवं स्यादित्यूहस्तर्क इति यत्तत्संभावनमित्यर्थः । उदाहरति.—यदिति । हे राजन् ! शेषोऽनन्तो वक्ता भवेद्यदि भवदीयगुणवर्णनापरस्स्याच्चेत्तर्हि तव गुणाश्शौर्यौदार्यादिगुणाः

६५. मिथ्याध्यवसित्यलङ्कारः ॥

किञ्चिन्मिथ्यात्वसिद्ध्यर्थं मिथ्यार्थान्तरकल्पनम् ।
मिथ्याध्यवसितिर्वेश्यां वशयेत्खस्रजं वहन् ॥ १२४

६६. ललितालङ्कारः ॥

प्रस्तुते वर्ण्यवाक्यार्थप्रतिबिम्बस्य वर्णनम् ।
ललितं निर्गते नीरे सेतुमेषा चिकीर्षति ॥ १२५

कथितास्स्युः निश्शेषं कीर्तितास्स्युः अतोहमेकमुखत्वात्तान् साकल्येन स्तोतुं कथं शक्नुयामिति भावः । अत्र राजगुणानामपरिमितत्वसिद्धये शेषो वक्ता चेद्गुणाः कथिता भवेयुरित्यूहवर्णनात्संभावनम् ॥

मिथ्याध्यवसितिं लक्षयति—किञ्चिन्मिथ्यात्वासिद्ध्यर्थं किञ्चित्प्रकृतस्य मिथ्याभूतत्वसूचनाय मिथ्यार्थं किञ्चिन्मिथ्याभूताप्रकृतार्थकल्पनमिति यत्सा मिथ्याध्यवसितिरित्यर्थः । उदाहरति—वेश्यामिति । यो हि वेश्यां वशीकर्तुमिच्छति स पुरुषः खस्रजं गगनपुष्पमालां वहन् सन् वेश्यां वशयेत् वशीकुर्यात् । गगनकुसुममालिकाधारणं सम्भावितं चेद्वेश्यावशीकरणं सम्भावितमित्यर्थः । गगनकुसुममालिकाधारणं यथात्यन्तानुपपन्नं तथा वेश्यावशीकरणमपीति मिथ्यार्थान्तेरण तद्वशीकरणमिथ्यात्वसिद्धिर्भवतीति मिथ्याध्यवसितिः ॥ १२४

अथ ललितं लक्षयति—प्रस्तुत इति । प्रस्तुते धर्मिणि यो वर्ण्यवाक्यार्थः तत्प्रतिबिम्बस्य तत्सदृशावर्ण्यवाक्यार्थस्य वर्णनं ललितं । प्रकृते नायिकादिधर्मिणि तदीयप्रस्तुतवृत्तान्तमवर्णयित्वा

### ६७. प्रहर्षणालङ्कारः (तद्भेदाः)

उत्कण्ठितार्थसंसिद्धिर्विना यत्नं प्रहर्षणम् ।
तामेव ध्यायते तस्मै निसृष्टा सैव दूतिका ॥ १२६

तत्सदृशप्रस्तुतं वर्ण्यते चेत्तर्हि ललिताख्योलंकार इति निष्कर्षः । उदाहरति—निर्गत इति । एषा नायिका नीरे उदके निर्गते सति अतिक्रान्ते सति सेतुं जलबन्धनं चिकीर्षति कर्तुमिच्छति । स्वतस्समागतं कंचिद्दक्षिणनायकं कोपादुपेक्ष्य तस्मिन् गत्वाऽन्यासक्ते सति पुनस्तदानयनार्थं यत्नं करोतीति वर्णनीयं वाक्यार्थमवर्णयित्वा तस्यां तत्सदृशगतजलसेतुबन्धनवृत्तान्तस्य वर्णनमिति भवति ललिताल्ङ्कारः ॥ १२५

अथ प्रहर्षणं । तत्त्रिविधं । यत्नं विना ईप्सितार्थसिद्धिरूपं । वाञ्छितार्थादधिकार्थसिद्धिरूपं । उपायार्थयत्नात्फलसिद्धिरूपं चेति । तत्राद्यं लक्षयति—उत्कण्ठितेति । सर्वेन्द्रियसुखास्वादो यत्र भवति तद्विषयकभावविशेषउत्कण्ठेत्युच्यते । तद्विषयो योऽर्थः तत्संसिद्धिर्यत्नं विना स्याद्यदि तर्हि प्रहर्षणं स्यादित्यर्थः । उदाहरति—तामिति । या यस्य परमप्रेमास्पदीभूता तामेव ध्यायते तत्प्राप्तिः कदा वा स्यादिति चिन्तयते तस्मै नायकाय सैव चिन्तितैव दूतिका सती निसृष्टा प्रेषिता नायिका स्वकान्तानयनाय तदभिलषितामेव दूतीं सतीं दैवात्तस्मै प्रेषितवतीत्यर्थः । अत्र यस्यां नायकस्यात्यन्तानुरागः सैव दैवान्नायिकया दूतिका सती तस्मै प्रेषितेति यत्नं विना ईप्सितार्थसिद्धिवर्णनात्प्रहर्षणम् ॥ १२६

वाञ्छितादधिकार्थस्य संसिद्धिश्च प्रहर्षणम् ।
दीपमुद्योतयेद्यावत्तावदभ्युदितो रविः ॥ १२७

यत्नादुपायसिद्ध्यर्थात्साक्षाल्लाभः फलस्य च ।
निध्यञ्जनौषधीमूलं खनता साधितो निधिः ॥ १२८

## ६८. विषादनालङ्कारः ॥

इष्यमाणविरुद्धार्थसम्प्राप्तिस्तु विषादनम् ।

---

द्वितीयं लक्षयति—वाञ्छितादिति । वाञ्छितात् स्वाभिलषितात् अधिकार्थस्य संसिद्धिश्च प्रहर्षणम् । केनचित्कंचिदर्थमपेक्ष्य-यत्ने कृते सति तेन तस्मादप्यधिकार्थो लब्धश्चेत्तदपि प्रहर्षणमित्यर्थः । उदाहरति—दीपमिति । यावद्दीपमुद्योतयेद्वस्तुप्रकाशायोज्ज्वलयेत्तावत्तदैव रविस्सूर्यः अभ्युदितः अत्र पदार्थप्रकाशार्थं दीपोद्योतनप्रयत्ने सति दैवात्तदैव दीपादप्यधिकप्रकाशस्य सूर्यस्योदयात्प्रार्थितार्थादधिकार्थसिद्धिरूपमिदं प्रहर्षणम् ॥ १२७

तृतीयं लक्षयति—यत्नादिति । उपायसिद्ध्यर्थादुपायप्राप्तिहेतुभूताद्यत्नात्साक्षात्फलस्य कार्यस्यैव लाभः प्रहर्षणमित्यर्थः । फलं प्राप्तुं तदुपायसम्पादनाय यत्ने कृते सति तत्रैव यदि फललाभस्स्यात् तदा प्रहर्षणमिति निष्कर्षः । उदाहरति—निध्यञ्जनेति । निध्यञ्जनस्य निक्षेपप्रदर्शनाञ्जनस्य यदोषधीमूलं तत्खनता खनकेन अञ्जनप्रकृतिभूतमोषधीमूलमुद्धरतेत्यर्थः । निधिर्निक्षेपएव साधितः । अत्र निध्युपायाञ्जनमूलमुद्धर्तुं यत्ने कृते सति दैवात्तत्रैव निधिर्दृष्टोभूदित्युपायार्थयत्नात्फलमेव साक्षात्प्राप्तमिति भवति तृतीयं प्रहर्षणम् ॥ १२८

विषादनं लक्षयति—इष्यमाणेति । इष्यमाणस्य प्रार्थ्यमानस्य

दीपमुद्योतयेद्यावन्निर्वाणस्तावदेव सः ॥ १२९

६९. उल्लासालङ्कारः (तद्भेदाः) ॥

एकस्य गुणदोषाभ्यामुल्लासोन्यस्य तौ यदि ।
अपि मां पावयेत्साध्वी स्नात्वेतीच्छति जाह्नवी ॥ १३०
काठिन्यं कुचयोस्स्रष्टुं वाञ्छन्त्यः पादपद्मयोः ।

---

विरुद्धो योर्थस्तत्सम्पादनं विषादनमित्युच्यते । यत्रेप्सितार्थसिद्ध्यर्थं यत्ने कृते सति दैवात्तद्विरुद्धानिष्टप्राप्तिर्भवतीति वर्ण्यते तत्र विषादनमिति निष्कर्षः । उदाहरति—दीपमिति । यावद्यदा दीपमुद्योतयेत् उद्योतनाय यत्नं कुर्यात्तावदेव स दीपः निर्वाणः नष्टोऽभवत् । अत्रेष्यमाणदीपद्योतनयत्ने सति तद्विरुद्धानिष्टनिर्वाणमापतितमिति भवति विषादनम् ॥ १२९

अथोल्लासं लक्षयति—एकेति । एकस्य गुणदोषाभ्यां हेतुभ्यामन्यस्य तौ यदि गुणदोषौ स्यातां चेत्तदोल्लासः । अयमत्र निष्कर्षः । अन्यगुणेन तदन्यगुणोत्पत्तिवर्णने अन्यदोषेण तदन्यस्य दोषोत्पत्तिवर्णने अन्यगुणेन तदन्यस्य दोषोत्पत्तिवर्णने अन्यदोषेण तदन्यस्य गुणोत्पत्तिवर्णने च चतुर्विध उल्लासस्स्यादिति । तत्राद्यमुदाहरति—अपीति । इयं साध्वी पतिव्रता स्नात्वा मत्प्रवाहे स्नानं कृत्वा पावयेदिति स्नानेन मां पवित्रां कुर्यादिति जाह्नवी गङ्गा नदी इच्छति जगत्पावन्याः गङ्गाया अपि पतिव्रतामहिमगुणेन तदीयस्नानात्पावनत्वगुणो वर्णित इति भवति प्रथमोल्लासः ॥ १३०

द्वितीयं श्लोकेनोदाहरति—काठिन्यमिति । स्वच्छादीषु अरि-

निन्दन्ति विश्वधातारं त्वद्धाटीष्वरियोषितः ॥ १३१
तदभाग्यं धनस्यैव यन्नाश्रयति सज्जनं ।
लाभोयमेव भूपाल सेवकानां न चेद्वधः ॥ १३२

योषितः पादचारेण पलायमानाश्शत्रुस्त्रियः कुचयोस्सृष्टं यत्काठिन्यं तत्पादपद्मयोस्स्वकीयमृदुचरणयोर्वाञ्छन्त्यः चरणयोरेव काठिन्यं स्याच्चेज्जीवेमेतीच्छन्त्यस्सत्यः विश्वधातारं जगद्धातारं निन्दन्ति । अयं विधिः कुचयोः काठिन्यमसृष्ट्वा पादयोरेव तत्सृजेद्यदि तर्ह्यस्मिन्पाद-सञ्चारसमये बहूपकारी स्यात् तथा न निर्मितवानतस्तं धिगिति निन्दां कुर्वन्तीत्यर्थः । अत्र धाटीषु वनभूमौ पलायमानानामरिस्त्रीणां धावनविरोधिचरणमार्दवदोषेण तयोः काठिन्यमसृष्ट्वा व्यर्थं कुचयोरेव सृष्टवतो विधेर्निन्दादोषो वर्णित इति द्वितीयोल्लासः ॥ १३१

तृतीयमुदाहरति—तदिति । धनं निकृष्टमाश्रयति सज्जनं तु नाश्रयतीति यत्तद्धनस्यैवाभाग्यं सज्जनस्य तु न कोऽपि दोष इति भावः । अत्र सज्जनगुणेन तदनाश्रयणं धनस्य दोषत्वेन वर्णितमिति भवत्यन्यगुणेन अन्यदोषोत्पत्तिरूप उल्लासः ॥

चतुर्थमुदाहरति—लाभ इति । इत्थं हिताचरणतत्पराणां सेवकानां राज्ञा न किञ्चिदपि दीयते चेत्तत्कथमिति केन चित्पृष्टे सति कस्यचिदिदमुत्तरं । हे सखे ! भूपालसेवकानां राजभृत्यानां वधो नचेत्तत्कृतहिंसा नाभूद्यदि अयमहिंसनरूप एव लाभः इतरलाभो मास्त्विति भावः । अत्र राजक्रौर्यदोषेण सेवकानां वधं विना प्राणैस्सह विनिर्गमनं गुणत्वेन वर्णितमिति भवति दोषेण गुणवर्णनरूप उल्लासः ॥ १३२

## ७०. अवज्ञालङ्कारः (तद्भेदाः) ॥

ताभ्यां तौ यदि न स्यातामवज्ञालंकृतिर्मता ।
स्वल्पमेवाम्बु लभते प्रस्थः प्राप्यापि सागरम् ॥ १३३
मीलन्ति यदि पद्मानि का हानिरमृतद्युतेः ।

अथावज्ञा । सा द्विविधा । अन्यगुणेनान्यगुणाभाववर्णनरूपा । अन्यदोषेणान्यदोषाभाववर्णनरूपा चेति । द्विविधामपि तां लक्षयति—ताभ्यामिति । ताभ्यां गुणदोषाभ्यां तौ गुणदोषौ न स्यातां यदि अवज्ञालंकृतिः मता इष्टा । अन्यगुणेन अन्यगुणाभावः अन्यदोषेणान्यदोषाभावश्च वर्ण्यते यदि तदा द्विविधावज्ञेत्यर्थः । आद्यामुदाहरति—स्वल्पमिति । प्रस्थो नाम व्रीह्यादिपरिच्छेदको दारुपात्रविशेषः । सः सागरं प्राप्यापि स्वल्पमेव अम्बु लभते प्राप्नोति । बहुजलपूर्णार्णवप्रवेशे सत्यपि प्रस्थस्य स्वपरिमितजलमात्रलाभः न तु बहुळजललाभ इति समुद्रवृद्ध्या तत्प्रविष्टप्रस्थस्य वृद्ध्यलाभवर्णनादन्यगुणेनान्यगुणालाभवर्णनरूपावज्ञा ॥ १३३

द्वितीयामुदाहरति—मीलन्तीति । पद्मानि मीलन्ति यदि संकुचन्ति चेत् अमृतद्युतेश्चन्द्रस्य का हानिः । सकलजनानन्दकरे सुधाकरेऽभ्युदिते सति सकलजनानामानन्देन मुखविकासो भवति एवं सति कमलानामेव मुकुळीभावश्चेत्तावता चन्द्रस्य का निन्देत्यर्थः । अत्र कमलमुकुळीभावदोषेण चन्द्रस्य तदप्राप्तिवर्णनादन्यदोषेणान्यदोषाभाववर्णनरूपा द्वितीयावज्ञा ॥

७१. अनुज्ञालङ्कारः ॥

दोषस्याभ्यर्थनानुज्ञा तत्रैव गुणदर्शनात् ॥ १३४
विपदस्संतु नश्शश्वद्यासु संकीर्त्यते हरिः ।

७२. लेशालङ्कारः ॥

लेशस्स्याद्दोषगुणयोर्गुणदोषत्वकल्पनम् ॥ १३५
अखिलेषु विहङ्गेषु हन्त स्वच्छन्दचारिषु ।
शुक पञ्जरबन्धस्ते मधुराणां गिरां फलम् ॥ २३६

---

अथानुज्ञां लक्षयति.—दोषस्येति । तत्रैव दोषस्थलएव गुणदर्शनाद्धेतोः दोषस्याभ्यर्थना याच्ञा अनुज्ञेत्युच्यते । उदाहरति—विपद इति । नोऽस्माकं विपद आपदः शश्वत्सदा संतु भवंतु । यासु विपत्सु हरिस्संकीर्त्यते । सम्पन्नास्तु धनमदान्धत्वात्कदाचिदपि हरिं न स्मरन्ति आपन्नास्तु तद्रक्षकं हरिं संस्मरन्तीति हरिसंकीर्तनरूपगुणदर्शनादनिष्टापि विपत्प्रार्थितेति भवत्यनुज्ञा । इदं तु वीतरागाणां वचनम् ॥

लेशं लक्षयति.—लेश इति । दोषगुणयोः क्रमेण गुणदोषत्वकल्पनं लेशस्स्यात् । अनुकूलत्वाद्दोषस्यापि गुणत्वं प्रतिकूलत्वाद्गुणस्यापि दोषत्वं यत्र कल्प्यते तत्र द्विविधो लेश इत्यर्थः । क्रमेण द्वावपि पूर्वोत्तरार्धाभ्यामुदाहरति.—अखिलेष्विति । राजबहुमानलाभेन चिरकालं राजधान्यां विदुषि पुत्रे निवसति सति तद्दर्शनोत्सुकस्य स्वगृहस्थस्य पितुरप्रस्तुतप्रशंसारूपमिदं वचनं । हे शुक! अखिलेषु सर्वेषु विहङ्गेषु पक्षिषु त्वदन्यसर्वमूकपक्षिषु स्वच्छन्दचारिषु यथेच्छं चरत्सु सत्सु ते तव पञ्जरबन्धः निरोधनमिति यत् तन्मधु-

७३ मुद्रालङ्कारः

सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः ।
नितम्बगुर्वी तरुणी दृग्युग्मविपुला च सा ॥ १३७

७४. रत्नावल्यलङ्कारः ॥

क्रमिकाऽप्रकृतार्थानां न्यासं रत्नावलिं विदुः ।

---

राणां श्राव्याणां गिरां वाचां फलं हे पुत्र त्वदन्येष्वपण्डितजनेषु सर्वेषु स्वगृहेषु सुखं तिष्ठत्सु तवायं राजधान्यां चिरकालवासः त्वदीयपाण्डित्यमूलक इति त्वत्पाण्डित्यमेव प्रतिकूलमभूदिति वक्तव्ये तत्प्रत्यायनाय तत्सरूपशुकवृत्तान्तो वर्णितः । अत्र प्रथमार्धे सर्वविहङ्गेषु दोषभूतमवाग्मित्वं स्वच्छन्दचारहेतुत्वाद्गुणत्वेन वर्णितं । उत्तरार्धे तु शुकवाग्मित्वं गुणभूतं बन्धनहेतुत्वाद्दोषत्वेन वर्णितमिति भवति द्विविधो लेशः ॥

मुद्रां लक्षयति.—सूच्यार्थेति । सूच्यार्थस्य सूचनीयस्य वस्तुनः प्रकृतार्थपरैः प्रकृतार्थप्रतिपादनाय प्रयुक्तैः पदैरेव सूचनं मुद्रेत्युच्यते । प्रकृतार्थप्रतिपादकैरेव पदैः प्रकृतस्य सूच्यस्य यत्र सूचनं क्रियते तत्र मुद्राख्योलंकारः । उदाहरति.—नितम्बगुर्वीति । सा प्रकृता तरुणी नायिका नितम्बगुर्वी स्थूलनितम्बेत्यर्थः । तथा दृग्युग्मे लोचनयुगळे विपुला विशालाक्षियुगळेत्यर्थः । अत्र नायिकासौन्दर्यप्रतिपादनपरे वचने लोचनवैपुल्यप्रतिपादनपरेण दृग्युग्मविपुलेतिपदेन एतद्वृत्तस्य युग्मविपुलानामधेयमिति प्रकृतसूच्यवृत्तनाम्नस्सूचनाद्भवति मुद्रा ॥

रत्नावळिं लक्षयति—क्रमिकेति । क्रमिकाः लोकप्रसिद्धपौर्वा-

चतुरास्यः पतिर्लक्ष्म्यास्सर्वज्ञस्त्वं महीपते ॥ १३८

७५. तद्गुणालङ्कारः ॥

तद्गुणस्स्वगुणत्यागादन्यदीयगुणग्रहः ।
पद्मरागायते नासामौक्तिकं तेऽधरत्विषा ॥ १३९

७६. पूर्वरूपालङ्कारः (तद्भेदाः)

पुनस्स्वगुणसम्प्राप्तिः पूर्वरूपमुदाहृतम् ।

---

पर्ययुक्ताः ये अप्रकृतार्थाः तेषां न्यासं क्रमेणैव निवेशनं रत्नावळि रत्नावळिनामकमलंकारं विदुः । अयमत्र निष्कर्षः । यत्र प्रकृतस्य प्रसिद्धाप्रकृतब्रह्मादितादात्म्यप्रत्यायनाय प्रकृतार्थप्रतिपादनसमर्थैः पदैः प्रसिद्धक्रममविसृज्यैव प्रकृतार्थो निर्दिश्यते तत्र रत्नावळिरिति । उदाहरति—चतुरास्य इति । हे महीपते ! त्वं चतुरास्यः ब्रह्मा चारुवदनश्च । तथा लक्ष्म्याः पतिः विष्णुः राज्यलक्ष्मीश्वरश्च । तथा सर्वज्ञः शिवः अशेषज्ञश्च । अत्र ब्रह्मविष्णुमहेश्वरा इति प्रसिद्धसहवादानां वाचकैः पदैः प्रसिद्धपाठक्रमेणैव प्रकृतस्य राज्ञः प्रतिपादनाद्रत्नावळिः । अत्र राज्ञः प्रसिद्धब्रह्मादितादात्म्यं च प्रतीयते ॥

तद्गुणं लक्षयति—तद्गुण इति । स्वगुणत्यागादन्यदीयगुणस्य ग्रहः स्वीकारः तद्गुण इत्युच्यते । उदाहरति—पद्मरागायत इति । हे सखि ! ते नासामौक्तिकं नासिकाभूषणमुक्तामणिः अधरत्विषा ओष्ठकान्त्या पद्मरागायते पद्मरागमणिरिवाचरति अत्र नासामौक्तिकस्य स्वधावळ्यत्यागेन अन्याधररक्ततास्वीकारवर्णनाद्भवति तद्गुणः ॥

अथ पूर्वरूपं । तच्च द्विविधं । पुनः स्वगुणप्राप्तिरूपं । विकारे

हरकण्ठांशुलिप्तोऽपि शेषस्त्वद्यशसा सितः ॥ १४०

पूर्वावस्थानुवृत्तिश्च विकृते सति वस्तुनि ।
दीपे निर्वापितेऽप्यासीत्काञ्चीरत्नैर्महन्महः ॥ १४१

सति पूर्वावस्थानुवृत्तिरूपश्चेति । तत्राद्यं लक्षयति—पुनरिति । पुनस्स्वगुणस्य सम्प्राप्तिः स्वीकारः पूर्वरूपमित्युच्यते । स्वगुणत्यागेन अन्यगुणस्वीकारे सति कुतश्चिद्धेतोः पुनस्स्वकीयगुणमेव प्राप्नुयाद्यदि तदा पूर्वरूपं नामालङ्कार इति निष्कर्षः । उदाहरति—हरेति । हे रामचन्द्र ! शेषोऽनन्तः हरकण्ठांशुभिः शिवगळशोभाभिः लिप्तः रञ्जितोऽपि श्यामीकृतोऽपीत्यर्थः । त्वद्यशसा सितः अभूदिति शेषः । कीर्तिधावळ्येन गरळनैल्यं विहाय पुनः स्वकीयमेव धावळ्यं प्राप्तवानित्यर्थः । अत्र शेषस्य धावळ्यत्यागपूर्वकं विषनैल्यस्वीकारे सति राजकीर्त्या पुनः स्वधावळ्यवर्णनात्पूर्वरूपम् ॥ १४०

द्वितीयं लक्षयति—पूर्वेति । वस्तुनि विकृते विकारयुक्ते सत्यपि पूर्वावस्थायाः प्रागवस्थायाः अनुवृत्तिरनुस्मृतिः निष्पत्तिरित्यर्थः । सा पूर्वरूपमित्युच्यते । उदाहरति—दीप इति । दीपे निर्वापिते सत्यपि । कयाचिन्मुग्धयेति शेषः । काञ्चीरत्नैः तदीयमेखलाखचितमणिभिः महद्दीपादप्युत्कृष्टं महः कान्तिरासीत् आविरभूदित्यर्थः । कयाचिन्मुग्धया लज्जावशाद्रतिकाले दीपे नष्टीकृते सत्यपि काञ्चीरत्नैरेव पूर्वावस्थापरप्रकाशकत्वलक्षणा निवृत्तिरहिताऽभूदिति वर्णनाद्भवति पूर्वरूपभेदः ॥ १४१

### ७७. अतद्गुणालङ्कारः ॥

सङ्गतान्यगुणानङ्गीकारमाहुरतद्गुणम् ।
चिरं रागिणि मच्चित्ते निहिताऽपि न रज्यसि ॥ १४२

### ७८. अनुगुणालङ्कारः ॥

प्राक्सिद्धस्वगुणोत्कर्षोऽनुगुणः परसन्निधेः ।
नीलोत्पलानि दधते कटाक्षैरतिनीलताम् ॥ १४३

---

अतद्गुणं लक्षयति—सङ्गतेति । सङ्गतः स्वसंयुक्तः योऽन्य पदार्थस्तस्य यो गुणस्तस्यानङ्गीकारं अस्वीकरणमतद्गुणाख्यमलङ्कारमाहुः । स्वसंयुक्तान्यनिष्ठगुणस्य स्वस्मिंत्संक्रमणयोग्यस्यापि यत्रासंक्रमणं वर्ण्यते तत्रातद्गुण इति निष्कर्षः । उदाहरति—चिरमिति । स्निह्यन्तमपि नायकमुपेक्ष्य कुपितां नायिकामुद्दिश्य नायकवचनमिदं । हे नायिके ! रागिणि त्वद्विषयकप्रेमयुक्ते अरुणे च मच्चित्ते चिरं चिरकालं निहिता स्थापिताऽपि त्वं न रज्यसि अनुरक्ता लोहिता च न भवसि । चिरमनुसरन्तमपि मां किमिति नानुगृह्णासीति तात्पर्यं । तत्र रक्ते मनसि स्थितायां नायिकायां स्वसंयुक्तमनोनिष्ठरागासंक्रमणोक्तिरतद्गुणः ॥

अनुगुणं लक्षयति—प्रागिति । प्राक्सिद्धः गुणवत्सन्निधानात्पूर्वं स्थितो यस्स्वगुणः तस्य परसन्निधेः गुणवदन्यसन्निधानाद्य उत्कर्षोऽतिशयस्सोऽनुगुण इत्युच्यते । उदाहरति—नीलोत्पलानीति । नीलोत्पलानि नायिकाकर्णान्तगतेन्दीवराणि कटाक्षैः नायिकाकटाक्षवीक्षणैः अतिनीलतां पूर्वादभ्यधिकनैल्यं दधते बिभ्रति । अत्र स्वतो

७९. मीलितालङ्कारः (तद्भेदाः) ॥

**मीलितं यदि सादृश्याद्भेदएव न दृश्यते ।**
**रसो नालक्षि लाक्षायाश्चरणे सहजारुणे ॥ १४४**

**मल्लिकामाल्यधारिण्यस्सर्वाङ्गीनार्द्रचन्दनाः ।**
**क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः ॥ १४५**

८०. सामान्यालङ्कारः ॥

**सामान्यं यदि सादृश्याद्विशेषो नोपलक्ष्यते ।**
**पद्माकरं प्रविष्टानां मुखं नालक्षि सुभ्रुवाम् ॥ १४६**

---

नीलानामप्युत्पलानां कटाक्षप्रसारेणातिनैल्यवर्णनाद्भवत्यनुगुणालङ्कारः ॥ १४३

मीलितं लक्षयति—मीलितमिति । सादृश्याद्गुणादिनान्यस्यासदृशत्वाद्भेदः उभयोः वैलक्षण्यं न लक्ष्यते यदि तदा मीलितमित्यर्थः । उदाहरति—रस इति । सहजारुणे स्वभावरक्ते चरणे नायिकापदे लाक्षाया यावकस्य रसो नालक्षि चरणापेक्षया व्यक्त्यन्तरत्वेन नालक्ष्यतेत्यर्थः । अत्र चरणालक्तकरसयोरारुण्यगुणसाम्याद्भेदानध्यवसाय इति भवति मीलितम् ॥ १४४

द्वितीयोदाहरणं दर्शयति—मल्लिकेति । अत्र चन्द्रिकाभिसारिकाणां धवळिमगुणसाम्याद्भेदानध्यवसाय इति लक्षणसंगतिः ॥

सामान्यं लक्षयति—सामान्यमिति । सादृश्यात्साधर्म्यात् । कान्त्येति शेषः । विशेषः (उपमानोपमेययोः) परस्परव्यावर्तकधर्मः

८१. उन्मीलितालङ्कारः ॥

भेदवैशेष्ययोः स्फूर्तावुन्मीलितविशेषकौ ।
हिमाद्रिं त्वद्यशोमग्नं सुराश्शीतेन जानते ॥ १४७

८२. विशेषकालङ्कारः ॥

लक्षितान्युदिते चन्द्रे पद्मानि च मुखानि च ।

---

नोपलक्ष्यते नावधार्यते यदि तर्हि सामान्यमित्युच्यत इत्यर्थः । उदाहरति—पद्मेति । पद्माकरं प्रविष्टानां सरोमध्यगतानां सुभ्रुवां सुन्दरीणां मुखं जातावेकवचनं । मुखानीत्यर्थः । नालक्षि नावधारितं । अत्र सरः प्रविष्टस्त्रीमुखानामब्जैरत्यन्तसादृश्येन व्यावर्तकधर्मानुपलम्भाद्भवति सामान्यम् ॥ १४६

अथोन्मीलितविशेषकावेकार्थेन लक्षयति—भेदेति । भेदवैशेष्ययोर्भिन्नत्वविशेषधर्मयोः स्फूर्तौ प्रकाशने सति क्रमेणोन्मीलितविशेषकाख्यावलंकारौ भवत इत्यर्थः । द्वयोस्सादृश्येन भेदे तिरोहिते सति दैवात्कारणान्तराद्यत्र भेदोपलम्भस्तत्रोन्मीलितं । यत्र भिन्नत्वेन ग्रहणेपि विशेषास्फूर्तौ सत्यां दैवाद्विशेषधर्मग्रहणादिदमेव मुखमित्यादि विवेको भवति तत्र विशेषक इति निष्कर्षः । तत्राद्यमुदाहरति—हिमाद्रिमिति । हे श्रीरामचन्द्र ! सुरा देवास्त्वद्यशोमग्नं भवत्कीर्त्यन्तरितं सादृश्यात्तदेकतापन्नमित्यर्थः । हिमाद्रिं शीतेन शैत्यगुणेन जानते तदुभयभेदं निश्चिन्वन्तीत्यर्थः । अत्र यशसा अभिन्नस्य हिमाद्रेश्शैत्यधर्मेण भिन्नत्वेन स्फुरणादुन्मीलितम् ॥ १४७

विशेषकमुदाहरति—लक्षितानीति । चन्द्रे उदिते सति पद्मानि मुखानि च इमानि पद्मानि इमानि स्त्रीमुखानीति विविच्य गृहीता-

८३. गूढोत्तरालङ्कारः (तद्भेदाः) ॥

किञ्चिदाकूतमहितं स्याद्गूढोत्तरमुत्तरम् ॥ १४८
यत्रासौ वेतसः पान्थ तत्रेयं सुतरा सरित् ॥

चित्रोत्तरालङ्कारः ॥

प्रश्नोत्तरान्तराभिन्नमुत्तरं चित्रमुत्तरम् ॥ १४९

नीत्यर्थः । मुखानां पद्मानां विशेषास्फूर्तौ सत्यां चन्द्रोदयकृतमुकुळनेन इमानि पद्मानि चन्द्रोदयेपि विकासयुक्तत्वादिमानि स्त्रीमुखानीति विविच्य गृहीतानीति कथनात् विशेषकः ॥

गूढोत्तरं लक्षयति—किञ्चिदिति । किञ्चिदाकूतेन आशयेन महितं च मत्कृतं यदुत्तरं तद्गूढोत्तरं स्यादित्यर्थः । उदाहरति—केनचित्किञ्चिद्विषयकप्रश्ने कृते सति तत्र केनचित्स्वाशयगर्भमुत्तरं दीयते चेत्तद्गूढोत्तरं स्यादित्यर्थः । उदाहरति—यत्रेति । अस्यास्सरितः कुत्र वा तरणमार्ग इति पृच्छन्तं पान्थमुद्दिश्य तत्संगमे साभिलाषायाः कस्याश्चिदिदमुत्तरं । हे पान्थ असावदूरे परिदृश्यमानः वेतसो वञ्जुलकुञ्जः यत्र यस्मिन् देशे वर्तते यत्र देशे इयं पुरोवर्तिनी सरित् । नदी सुतरा सुखेन तरितुं शक्या । तं देशं गच्छ । जनसम्मर्दरहिते एतन्निकुञ्जे आवयोर्यथेच्छं विहारो भविष्यतीति तस्या आकूतमिति स्वाकूतगर्भमुत्तरं तत्पृष्ट्या तया तस्य दत्तमिति भवति गूढोत्तरम् ॥

अथ चित्रोत्तरं तद्द्विविधम् । प्रश्नाभिन्नोत्तर मुत्तरान्तराभिन्नोत्तरं चेति । उभयमप्येकार्थेन लक्षयति—प्रश्नोत्तरेति । प्रश्नोत्तरान्तराभिन्नं प्रश्नाभिन्नमुत्तराभिन्नं च यदुत्तरं तच्चित्रोत्तरमित्यर्थः । केन किंक-

केदारपोषणरताः के खेटाः किं चलं वयः ।

द्विद्विषयकप्रश्ने कृते सत्यन्येन चतुरजनेन तत्प्रश्नवाक्यमेवोत्तरत्वेन दत्तं चेत्तत्प्रश्नाभिन्नोत्तरमित्यर्थः । केन चिदर्थद्वयविषयकप्रश्ने कृते सति तस्योत्तरद्वये वाच्येऽन्येन निपुणजनेन एकमेवोत्तरमुत्तरान्तराभिन्नत्वेन दत्तं चेत्प्रश्नद्वयस्याप्येकमेवोत्तरं दत्तं यदि तदुत्तरान्तराभिन्नोत्तरमित्युच्यत इत्यर्थः । उभयमपि क्रमेणैकार्थेनोदाहरति.—केदारेति । दारपोषणरताः भार्यापोषणासक्ताः के वा स्युः इति प्रश्नः । उत्तरे तु केदारपोषणरता इत्यखण्डमेव पदम् । केदाराणां व्रीह्याद्युत्पादकक्षेत्रणां पोषणे वर्धने ये रताः आसक्ताः । कृषिजीवना इत्यर्थः। तएव दारपोषणरता इत्युत्तरवाक्यार्थः । कृषितो नास्ति दुर्भिक्षमिति न्यायेन तेषामेव कुटुम्बरक्षणशक्तिरित्यर्थः । अत्र केदारपोषणरता इति प्रश्नस्यैवोत्तरत्वात्प्रश्नाभिन्नोत्तरनामकं चित्रोत्तरम् ॥

द्वितीयमुदाहरति—के खेटा इति । खे गगने अटन्ति संचरन्तीति खेटा गगनसंचारिणः के वा भवेयुः । तथा चलं चञ्चलमस्थिरमित्यर्थः । किं वा भवेदिति प्रश्नद्वयं । तस्य भेदेनोत्तरद्वये दातव्येप्युत्तरान्तरमनुक्त्वा चातुर्येण तदभिन्नमेकमेवोत्तरं चतुरः प्राह । वय इति । इदं लिङ्गवचनश्लेषेण प्रश्नद्वयस्याप्युत्तरम् । तत्र प्रथमाबहुवचनमिकरान्तं च वय इत्येतत्पदं के खेटा इत्यस्योत्तरं । गगनसंचारिणः के वा भवेयुरिति प्रश्ने कृते सति वयः पक्षिणएव तादृश इति तदर्थः । किं चलमित्यस्य तु सकारान्तं प्रथमैकवचनान्तं च वय इति पदमुत्तरं । अस्थिरं किं भवेदिति प्रश्ने वयो बाल्यादिकमेव तादृशमिति तदर्थः । अत्र वय इत्येकमेव पदं के खेटाः किं चल-

८४. सूक्ष्मालङ्कारः ॥

**सूक्ष्मं पराशयाभिज्ञे तरसाकूतचेष्टितं ॥** १५०
**मयि पश्यति सा केशैस्सीमन्तमणिमावृणोत् ।**

८५. पिहितालङ्कारः ॥

**पिहितं परवृत्तान्तज्ञातुस्साकूतचेष्टितं ॥** १५१

मिति प्रश्नद्वयस्योत्तरमभूदितीदमुत्तरान्तराभिन्नोत्तरनामकं चित्रोत्तरम् । एतदुदाहरणान्तराणि विदग्धमुखमण्डने द्रष्टव्यानि ॥

सूक्ष्मं लक्षयति.—सूक्ष्ममिति । पराशयाभिज्ञः अन्याभिप्रायवेदी इतरो यस्तस्य साकूतचेष्टितं साभिप्रायचेष्टाविशेषस्सूक्ष्ममित्युच्यते । केनचिच्चतुरजनेन लोचनादिचेष्टयैव स्वाभीष्टे प्रार्थिते सति तदभिप्रायवेदिनः कस्यचिज्जनस्य तदुचितस्वाभिप्रायसूचकचेष्टाविशेषस्सूक्ष्माख्योऽलंकार इति निष्कर्षः । उदाहरति—मयीति । संकेतकालज्ञानेच्छया त्वयि गते सति तया नायिकया किमाचरितमिति केनचित्सख्या पृष्टस्य कस्यचिदिदं वचनं । मयि पश्यति साभिप्रायं विलोकयति सति सा नायिका सीमन्तमणिं स्वीयकेशबद्धभूषणरत्नं केशैरावृणोदाच्छादितवती । आवयोस्संकेतकालः क इत्याशयेन तत्परिज्ञानार्थं मयि साकूतं पश्यति सति सा मदाशयं ज्ञात्वा सूर्यास्तमयानन्तरमन्धकारोदये सति आवयोस्संकेतकाल इत्यभिप्रायसूचकं स्वकीयकेशैस्सीमन्तमणितिरोधानरूपं चेष्टाविशेषं कृतवतीत्यर्थः । अत्र नायकाभिप्रायं जानन्त्या नायिकया साकूतं केशैर्मण्यावरणं कृतमिति सूक्ष्मम् ॥

पिहितं लक्षयति—पिहितमिति । परवृत्तान्तज्ञातुः परकीयवृ-

प्रिये गृहागते प्रातः कान्ता तल्पमकल्पयत् ।

८६. व्याजोक्त्यलङ्कारः ॥

व्याजोक्तिरन्यहेतूक्त्या यदाकारस्य गोपनम् ॥ १५२

सखि पश्य गृहारामपरागैरस्मि धूसरा ।

---

त्तान्तज्ञस्य साकूतचेष्टितं साभिप्रायचेष्टाविशेषः पिहितमित्युच्यते । परवृत्तान्तं तदीयलक्षणैः ज्ञात्वा कण्ठतोऽनुद्घाट्यैव स्वस्य तदभिज्ञतास्तीत्यभिप्रायगर्भः इतरजनचेष्टाविशेषः पिहितमित्युच्यते उदाहरति—प्रिय इति । प्रिये कान्ते प्रातः प्रातः काले गृहागते स्वगृहं प्रत्यागते सति कान्ता तत्प्रिया तल्पं शय्यां अकल्पयत् । आस्तरणादिना सज्जीकृतवतीत्यर्थः । रात्रौ सपत्नीगृहे यथेष्टविहारेण जागरणं कृत्वा प्रातः काले प्रिये स्वकीयगृहं प्रत्यागते सति तद्गतकुङ्कुमादिचिह्नैस्तदीयवृत्तान्तं ज्ञात्वा गाम्भीर्यात्कण्ठतस्तमनुद्घाट्यैव रात्रौ मत्सपत्नीगृहे जागरणाच्छ्रान्तोसि अतोऽस्यां शय्यायां सुखं शेष्वेत्यभिप्रायेणेयं तल्पकल्पनचेष्टेति भवति पिहितम् ॥

व्याजोक्तिं लक्षयति—व्याजोक्तिरिति । अन्यहेतूक्त्या हेत्वन्तरकथनेन आकारगोपनं स्वीयविलक्षणाकारनिगूहनमिति यत्सा व्याजोक्तिः यत्र केनचिन्निपुणेन गोप्यहेतुकृतमाकारवैलक्षण्यं हेत्वन्तरकल्पनेन निगूह्यते तत्र व्याजोक्तिरिति निष्कर्षः । उदाहरति—सखीति । चौर्यकृतरतिकाले भूतललुठनलग्नधूळिधूसरितस्वाङ्गविकारः सख्या मा विज्ञायि-इति हेत्वन्तरकथनेन तद्गोपनं कुर्वन्त्याः कस्याश्चिदिदं वचनं । हे सखि ! अहं गृहारामपरागैः गृहोपवनपुष्परेणुभिः धूसरा

## ८७. गूढोक्त्यलङ्कारः ॥

गूढोक्तिरन्योद्देश्या गीर्यदन्यं प्रति कथ्यते ॥ १५३
वृषाऽपेहि परक्षेत्रादायाति क्षेत्रपालकः ।

धूसरवर्णा कृतास्मि मां पश्य। अत्र चौर्यकृतसुरतहेतुकं स्वांगवैवर्ण्यमारामविहारकालीनपुष्पपरागरूपहेत्वन्तरकल्पनेनाच्छादितमिति भवति व्याजोक्तिः ॥

गूढोक्तिं लक्षयति—गूढोक्तिरिति। अन्यः उद्देश्यो यस्यास्सा अन्यं प्रति वक्तव्येत्यर्थः। गीर्वाक्यं अन्यमुद्दिश्य कं कंचिदप्रकृतं प्रतिपद्यत इति यत् सा गूढोक्तिः। इदमुद्दिश्य किंचिद्वक्तुमर्हं तद्गोप्यं करैर्मा विज्ञायीति तदेव वाक्यं तदन्यमप्रकृतमुद्दिश्य श्लेषभंग्या कथ्यते चेत्सा गूढोक्तिरिति निष्कर्षः। उदाहरति—वृषेति—कस्मिंश्चित्कामुके परकळत्रमुपभुञ्जाने सति तत्पत्युरागमनं दूरतो दृष्ट्वा काचिदाह—हे विट! त्वं परकळत्रमुत्सृज्य गच्छ। तत्पतिरयमायातीति साक्षादुक्त्या तटस्थानां प्रकाशस्यादिति मनसि कृत्वा तदन्यं परक्षेत्रस्य भक्षकं समीपस्थं कञ्चिद्वृषभमुद्दिश्य तद्रहस्यस्थलसमीपस्थाया दूत्या इयमुक्तिः। हे वृष! बलीवर्द परक्षेत्रात्परकीयसस्यभूमेः परकळत्राच्च त्वमपेह्यपसर। कुतः? क्षेत्रपालकः सस्यभूमीश्वरः कळत्रस्वामी च आयात्यागच्छति। अत्र श्लेषभंग्या गूढमिममर्थं कामुको जानीयान्नान्य इत्याशयेन तं प्रति साक्षादनुक्त्वा तदुद्देश्यकमेव वाक्यमिदं तटस्थवञ्चनार्थमन्यं प्रति कथितमिति भवति गूढोक्तिः॥

८८. विवृतोक्त्यलङ्कारः ॥

विवृतोक्तिश्श्लिष्टगुप्तं कविनाऽऽविष्कृतं यदि ॥ १५४
वृषाऽपेहि परक्षेत्रादिति वक्ति स सूचनम् ।

८९. युक्त्यलङ्कारः ॥

युक्तिः परातिसन्धानं क्रियया मर्मगुप्तये ॥ १५५
त्वामालिखन्ती दृष्ट्वान्यां धनुः पौष्पं करेऽलिखत् ।

---

विवृतोक्तिं लक्षयति—विवृतोक्तिरिति । श्लिष्टगुप्तमुक्तरीत्या निगूहितं वस्तु कविना आविष्कृतं स्पष्टीकृतं यदि तदा विवृतोक्तिः । उदाहरति—वृषेति । हे वृष! त्वं परक्षेत्रादपेहि अपसर इति । सः सूचनं कामुकस्य प्रकाशनं यथा स्यात् तथा वक्ति वदति तद्भर्त्रागमनात्प्रागेव त्वमपसरेति तत्सहचरः कश्चित्तमुद्दिश्य हितमुपदिशतीत्यर्थः । अत्र श्लेषगुप्तार्थस्य कविनैव स सूचनमिति स्पष्टीकृतत्वाद्भवति विवृतोक्तिः ॥

युक्तिं लक्षयति—युक्तिरिति । मर्मगुप्तये स्वरहस्यगोपनाय क्रियया स्वमर्मच्छादकभ्रमसम्पादकक्रियाव्याजेन परातिसन्धानमनाप्तपुरुषवञ्चनं युक्तिरित्युच्यते । 'व्यलीकमतिसन्धान'मित्यमरः । अतिरहस्ये कर्मणि प्रवृत्तेन केनचित्स्वरहस्यप्रकाशभीरुणा मध्ये कस्मिन्नप्यनाप्ते समागते स्वमर्मप्रकाशो मा भूदिति कयाचित्क्रियया तस्य भ्रान्तिं सम्पाद्य यत्र वञ्चनं क्रियते तत्र युक्तिरिति निष्कर्षः । उदाहरति—त्वामिति । विरहातुरां नायिकामुपेक्षमाणं नायकमुद्दिश्य सखीवचनमिदं । हे नायक त्वत्प्रिया त्वामालिखन्ती विनोदार्थं

९०. लोकोक्त्यलङ्कारः ॥

लोकप्रवादानुकृतिर्लोकोक्तिरितिकथ्यते ॥ १५६
सहस्व कतिचिन्मासान्मीलयित्वा विलोचने ।

९१. छेकोक्त्यलङ्कारः ॥

छेकोक्तिर्यत्र लोकोक्तिस्स्यादर्थान्तरगर्भिता ॥ १५७
भुजङ्गएव जानीते भुजङ्गचरणं सखे ।

---

त्वत्प्रतिकृतिं पटादौ लिखन्ती सती अन्यामनाप्तां काश्चिद्दृष्ट्वा करे पौष्पं धनुः मन्मथचापमलिखत् तल्लेखनेन हेतुना इयं मन्मथं लिखतीति तस्या भ्रमं निष्पाद्य स्वकीयप्रियविषयातिकामनामाच्छादितवतीत्यर्थः । अत्र रहस्यनिगूहनाय पौष्पधनुर्निर्माणक्रियया तटस्थायाः वञ्चनं कृतमिति भवति युक्तिः ॥

लोकोक्तिं लक्षयति—लोकेति । लोकप्रवादस्य लौकिकसम्भाषणस्यानुकृतिरनुकरणं । तदनुकरणालाप इति यावत् । सा लोकोक्तिरिति कथ्यत इत्यर्थः । उदाहरति—सहस्वेति । सुदूरवर्तिभर्तृकां तद्दर्शनोत्सुकां नायिकामुद्दिश्य कस्याश्चित्सख्या इयमुक्तिः हे सखि ! विलोचने नेत्रे मीलयित्वा निमील्य कतिचित् त्रिचतुरान्मासान् सहस्व ततस्त्वत्प्रियः क्षेमेणागमिष्यतीति भावः । अत्र मीलयित्वा विलोचने इति लोकसम्भाषणानुकरणाल्लोकोक्तिः ॥

अथ छेकोक्तिं लक्षयति—छेकोक्तिरिति । यत्र लोकोक्तिरर्थान्तरगर्भिता स्यात्तत्र छेकोक्तिः । यत्र लोकवादानुकारि वाक्यम्

## ९२. वक्रोक्त्यलङ्कारः ॥

**वक्रोक्तिश्श्लेषकाकुभ्यामपरार्थप्रकल्पनम् ॥ १५८**
**मुञ्चमानं दिनं प्राप्तं नेह नन्दी हरान्तिके ।**

---

अर्थान्तरगर्भिताकारेण प्रयुज्यते तत्र छेकोक्तिरिति निष्कर्षः । उदाहरति—भुजङ्गएवेति । केनचित्कस्यचिद्वृत्तान्ते पृष्टे सति स्वयमजानन्निव स्वसमीपवर्तिनं कञ्चिन्निर्दिश्य अयमेव तद्वृत्तान्तं जानातीति यस्योपहासं ब्रूते तस्योक्तिरियं । हे सखे ! भुजङ्ग एव सर्पएव भुजङ्गचरणं सर्पपादं जानाति । न कोप्यन्यस्तत्पदं वेत्ति । अतोयमेव धनार्जनादौ तत्समाचरितत्वात्तद्वृत्तान्तमपि जानातीति लोकप्रवादाभिप्राये सति भुजङ्गशब्दस्य विटवाचित्वात्सचायं च द्वावपि विटावतस्तदीयव्यभिचारादिरहस्यं सर्वमप्ययमेव वेत्तीत्यर्थान्तरगर्भितेयं लोकोक्तिर्भवति ॥

वक्रोक्तिं लक्षयति—वक्रोक्तिरिति । श्लेषेण काका वा अपरार्थप्रकल्पनं वक्त्रभिप्रेतादन्यार्थे वाक्यतात्पर्यकल्पनं वक्रोक्तिः । केनचिदृजुबुद्ध्यैव वाक्ये प्रयुक्ते सति कोपादिवशादन्येन श्लेषेण काका वा तद्वचनस्यार्थान्तरं कल्पयित्वा यत्र वक्रभाषणं क्रियते तत्र वक्रोक्तिरिति निष्कर्षः । आद्यामुदाहरति—मुञ्चेति । स्वस्य अन्यासंगादिकृत कोपवशेन सुरतसुखपराङ्मुखीं काञ्चिन्नायिकामुद्दिश्य कश्चिन्नायकः प्राह—मुञ्चेति । हे प्रिये दिनमहः प्राप्तं प्रभातसमयः प्राप्तइत्यर्थः । अतो मानं कोपं मुञ्च त्यजेत्येवमृजुमतिना नायकेन वाक्ये प्रयुक्ते उदा०—पवशान्नायिकास्य वाक्यस्यान्यार्थं प्रकल्प्य वक्रोक्त्योत्तरमाह-
...ाः अर्थिन.। इह मन्निकटे नन्दी नन्दिकेश्वरः न विद्यते । किं
२... ...तः ५.

९३. स्वभावोक्त्यलङ्कारः ॥

स्वभावोक्तिस्स्वभावस्य जात्यादिस्थस्य वर्णनम् ॥ १५९
कुरङ्गैरुत्तरङ्गाक्षैः स्तब्धकर्णैरुदीक्षितम् ।

९४. भाविकालङ्कारः

भाविकं भूतभाव्यर्थसाक्षात्कारस्य वर्णनम् ॥ १६०
अहं विलोकयेऽद्यापि युध्यन्तेऽत्र सुरासुराः ।

---

तु हरान्तिके शिवसन्निधौ वर्तते । अतः प्राप्तं नन्दिनं मामुज्झेत्येवं कथं कथ्यत इत्यर्थः । तथा चान्यासङ्गपरवशेन त्वयोन्मत्तेनेवैवं न प्रलपितव्यमिति भावः । अत्र कालविलम्बहेतुं मानं विसृजेत्यर्थपरस्य नायकवाक्यस्य शब्दश्लेषेण प्राप्तं नन्दिनं न त्यजेत्यर्थान्तरकल्पनाद्भव-त्याद्या वक्रोक्तिः । एवं द्वितीयाप्यूह्या ॥

स्वभावोक्तिं लक्षयति—स्वभावोक्तिरिति । जात्यादिस्थस्य कुरङ्गत्वादिजातौ वर्तमानस्य । अत्रादिशब्देन क्रियादिः गृह्यते । स्वभावस्य वर्णनं यदि तदा स्वभावोक्तिरित्युच्यते । यत्र यथार्थवस्तु-वर्णनं चारु यथा तथा क्रियते तत्र स्वभावोक्तिर्नामालङ्कार इति निष्कर्षः । उदाहरति—कुरङ्गैरिति । उत्तरङ्गाक्षैः उद्गततरङ्गलोचनै-रतिचञ्चललोचनैरित्यर्थः । स्तब्धकर्णैरचाञ्चल्यं यथा तथोर्ध्वप्रसारित कर्णैरित्यर्थः । कुरङ्गैरुदीक्षितं दृष्टं व्याधार्दिता एवं ददृशुरित्यर्थः । अत्र चारु यथा तथा व्याधादिदर्शनरूपः कुरङ्गत्वजातिस्वभावो वर्णित इति भवति स्वभावोक्तिः ॥

अथ भाविकं लक्षयति—भाविकमिति । भूतभाव्यर्थसाक्षात्कारस्य गतार्थस्य भविष्यदर्थस्य च यस्साक्षात्कारस्तत्कारि वा[illegible]

९५. उदात्तालङ्कारः ॥

उदात्तमृद्धिश्चरितं श्लाघ्यं चान्योपलक्षणम् ॥ १६१
सानौ यत्राभवद्युद्धं तद्धूर्जटिकिरीटिनोः ।

९६. अत्युक्त्यलङ्कारः ॥

अत्युक्तिरद्भुतातथ्यशौर्यौदार्यादिवर्णनम् ॥ १६२
त्वयि दातरि राजेन्द्र याचकाः कल्पशाखिनः ।

---

मित्युच्यते । यत्रातीतानागते प्रत्यक्षत्वेन वर्ण्येते तत्र द्विवि-
र इति निष्कर्षः । तत्राद्यमुदाहरति—अहमिति । सुरासुराः
वाः अत्र प्रदेशे युध्यन्ते युद्धं कुर्वन्ति अहमद्यापि विलोकये ।
[illegible]नवयुद्धस्यातीतस्य प्रत्यक्षत्वेन वर्णितत्वाद्भाविकालङ्कारो
। एवं द्वितीयमप्यूह्यम् ॥

अथोदात्तं लक्षयति—उदात्तमिति । श्लाघ्यं श्लाघार्हं ऋद्धि-
मच्चरितं काकवद्देवदत्तगृहमित्यादिवद्वाच्योपलक्षणं सद्वर्ण्यते
दुदात्तमित्युच्यते । उदाहरति—सानाविति । धूर्जटिं प्रति
दिदं वचनं । अत्र शौर्यादिसमृद्धिमच्छिवार्जुनयुद्धरूपचरितं
वाच्यार्थस्य उपलक्षणं सद्वर्णितमिति भवत्युदात्तालङ्कारः ॥

अत्युक्तिं लक्षयति—अत्युक्तिरिति । अद्भुतातथ्यशौर्यौदार्यादि-
श्चर्यकरमिथ्याभूतशौर्यौदार्यादिगुणवर्णनं यदि तदात्युक्तिरित्यु-
उदाहरति—त्वयीति । हे राजेन्द्र त्वयि दातरि सकलाभीष्टप्रदे
[illegible]ः अर्थिनः कल्पशाखिनस्सुरतरवोऽभवन् त्वद्दत्ताप[illegible]
[illegible]तः याचका अपि स्वार्थिभ्योभीष्टानि द[illegible]

९७. निरुक्त्यलङ्कारः ॥

**निरुक्तिर्योगतो नाम्नामन्यार्थत्वप्रकल्पनम् ॥**
**ईदृशैश्चरितैर्जाने सत्यं दोषाकरो भवान् ।**

९८. प्रतिषेधालङ्कारः ॥

**प्रतिषेधः प्रसिद्धस्य निषेधस्यानुवर्णनम् ॥**
**नद्यूतमेतत्कितव क्रीडनं निशितैश्शरैः ।**

---

अत्र राजदानस्य याचकाः कल्पशाखिनइत्युक्त्याऽपरिमित पादितमतोऽद्भुतत्वं मिथ्याभूतत्वं च । तथाचाद्भुतमिथ्याभू वर्णितइति भवत्यत्युक्त्यलङ्कारः ॥

निरुक्तिं लक्षयति—निरुक्तिरिति । योगतः अ वशात् नाम्नां दोषाकरादिनामधेयानां अन्यार्थत्वप्रकल्पनं निरुक्तिरित्युच्यते । उदाहरति—ईदृशैरिति । चन्द्रो विरहिण्या वचनमिदं । हे चन्द्र! ईदृशैरीदृग्विधैश्चरितैर्वि हिणीपीडनादिदुश्चरितैर्हेतुभिः भवान् सत्यं यथा दोषाणामाकर इति यथार्थनामक इत्यहं जाने निश्चि दोषां रात्रिं करोतीति व्युत्पत्त्या निशाकरार्थकस्य दो दोषाणामाकर इति व्युत्पत्तिबलेनान्यार्थकल्पनान्निरुक्तिः

प्रतिषेधं लक्षयति—प्रतिषेध इति । प्रसि निषेधस्य अनुवर्णनमनुभाषणं प्रतिषेधः । यत्र क निर्ज्ञातत्वेन स्वतोनुपयोगादर्थान्तरगर्भतया चमत्क त्र प्रतिषेधालङ्कार इति निष्कर्षः । उदाहरति

तु हर
कथं
प्रलपि
नायक
त्याद्या
कुरङ्ग
स्वभा
वर्णनं
निष्कर्ष
रतिचक्र
कर्णैरि
चारु
इति भ
त्कारस्य